अष्टादशे वर्षे १८ ]   आषाढ़ पूर्णिमायाः १९९९ जुलाई १९४२   [ १ संख्या




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्त्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥ १

---

Sanctioned by the Directors of Public Instruction United Provinces, Bombay Presidency and Sind for use in Schools and Colleges.

सम्पादकः—

अवधेशप्रसादशर्मा द्विवेदः

उद्गम—स्थानम्—

श्रीभारतधर्ममहामण्डलम् , जगत्गंज, काशी ।

—:o:—

वार्षिकं मूल्यं मुद्रात्रयम् ।

संरक्षकेभ्यः ५)   बहिर्भारतम् ६)   छात्रेभ्यः १)

अष्टादशे वर्षे १८ ]    आषाढ़ पूर्णिमायाः १९९९ जुलाई १९४२    [ १ संख्या




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥१

---

Sanctioned by the Directors of Public Instruction United Provinces, Bombay Presidency and Sind for use in Schools and Colleges.

सम्पादकः—

अवधेशप्रसादशर्मा द्विवेदः

उद्गम—स्थानम्—

श्रीभारतधर्ममहामण्डलम्, जगत्गंज, काशी।

—:०:—

वार्षिकं मूल्यं मुद्रात्रयम्।

संरक्षकेभ्यः ५)    बहिर्भारतम् ६)    छात्रेभ्यः १)

# विषय सूची



---

## श्रीभारतधर्ममहामण्डलतो धर्मप्रचारः ।

( आषाढ़ श्रावणमासयोः १९९९ वैक्रमे )

श्रीमन्तो महामहोपदेशका गङ्गाविष्णुशास्त्रिमहोदयाः अपरे श्रीमहामण्डलस्य धर्मप्रचारका आषाढ़मासे श्रीमहामण्डलीयमादेशमादाय दरभंगायोगक्षेमान्तर्गत जयनगरे भगवन्नामयशःसंकीर्त्तनमहोत्सवसमारोहे गयान्तर्गतपरैयानगरे, पाटलिपुत्रे सारनान्तर्वर्त्ति सीवाननगरे च सनातनधर्मस्य विविधविषयमवलम्ब्य विशेषतो भक्तितत्त्वमङ्गीकृत्य नितान्तं प्रभावोत्पादकं व्याख्यानं दत्तवन्तः । श्रावणमासे तु काश्यामेव श्रीदुर्गामन्दिरमेलायां संकटमोचने च मूर्त्तिपूजन माहात्म्यं विशदरूपेण व्याख्यातवन्तः । किं बहुना, मिश्रपोखरास्थाने धर्मशालायां बोभूयमाने महति संकीर्त्तनसमारोहे श्रीमतां विद्वद्वरगङ्गाविष्णुशास्त्रिमहोदयानां वृन्दावनतः समागतानां मानसराजहंस शिरोमणीनां श्रीमतां बिन्दुजीमहोदयानां नितरां जनतामोदकरं भक्तिसुधाधाराधवलीकृतभावोत्कर्षसमुज्जृम्भितं परमरोचकं व्याख्यानद्वयमभूत् ।

## संस्कृतविश्वविद्यालयपरीक्षाफलम् ।

अखिल भारतवर्षीयसंस्कृतविश्वविद्यालयस्य १९४२ ईस्वीयपरीक्षाफलं 'सूर्योदय'-स्यास्मिन्नेवाङ्के प्रकाश्यते । नियमानुसारं परीक्षाफलसहितं सूर्योदयपत्रं केन्द्राध्यक्षमहोदयानां सविधे यास्यत्येव । परन्तु ये केचन परीक्षार्थिनः स्वयमेव सूर्योदयमभिलषन्ति, ते तत् प्रेषणार्थं आणकद्वयं ( चिटिकास्वरूपं ) नूनं प्रेषयन्तु । अन्यथा सूर्योदयो नैव प्रेष्येत ।

## संकेतविरहितं पत्रम् ।

केचन पत्रप्रेषकाः पत्रलेखनावसाने स्वकीयं ग्राम-पत्रालयमण्डलादिकं ( पोस्ट आफिस जिला ) न लिखन्ति । एतादृशानां पत्राणामुत्तरदाने महत् काठिन्यं भवति । पत्रलेखकैः स्वपूर्णसंकेतलेखने ध्यानं देयम् ।

---

# सूर्योदयः ।

अष्टादशे वर्षे १८ } आषाढ़ पूर्णिमायाः १९९९, जुलाई १९४२ । { १ संख्या

## ग्राहकेभ्यो निवेदनम् ।

आगाम्यङ्कतो भवतां 'सूर्योदय'-ग्राहकत्वं समाप्तिं गमिष्यति । अतश्च कृपया स्वकीयं वार्षिकं मूल्यं धनादेश-( मनिआर्डर ) द्वारा सम्प्रेष्यानुगृह्णन्तु । सति शुल्कप्रेषणविलम्बे सूर्योदयो वी० पी० द्वारा प्रेषयिष्यते । ततो व्ययाधिक्यं भविष्यतीति मा विस्मरन्तु भवन्तः । वी० पी० परावर्तनेन सुरभारतीप्रचारमात्रैकलाभेऽस्मिन् कार्ये अपूरणीया क्षतिर्न भवेदिति दयालुभिर्ग्राहकैर्ध्यानं देयम् ।

—कार्याध्यक्षस्य ।

प्रचारकाणां केन्द्राध्यक्षमहोदयानामेवमेव स्यादस्माभिः सह साहाय्यं तर्हि वयं कियतैव कालेन भारतेऽस्मिन् हिन्दुसंस्कृतेः सनातनधर्मस्य च प्रचारे बहुसाफल्यं लभेमहि । सर्वेऽपि केन्द्राध्यक्षा जानन्त्येव यदियमस्माकं धार्मिकाध्यात्मिकसंस्कृतविश्वविद्यालयीया परीक्षा तत्तद्विषयज्ञानं कारयन्तो सनातनधर्ममर्मज्ञानमपि समासज्जयन्ती यथार्थतो भारतीयार्यमर्यादाप्रचारिका विद्यते ।

सम्प्रति केन्द्राध्यक्षा विनिवेद्यन्ते यदग्रिमे वर्षे सर्वतः सन्नद्धीभूय सर्वेभ्योऽपि स्व-स्वकेन्द्रेभ्यः परीक्षार्थिनां संख्याः समेधयन्तु । अस्मिन् हायने पुनरपि परीक्षा-

पाठ्यपद्धतिः परिष्कृता सर्वथा गौरवपरिपूर्णा समादरणीया विद्यते। केन्द्राध्यक्षमहोदयाश्च द्विगुणितोत्साहाः परीक्षार्थिनां संख्यावर्द्धने बद्धपरिकरा भविष्यन्तीति महती शुभाशाऽस्माकम्। परीक्षयानया स्वस्वविषयज्ञानेन सह भारतीयार्य्यमर्य्यादाभिवृद्धिफलमपि परीक्षार्थिभिः समुपलब्धःस्यादित्यपि तैर्न विस्मर्तव्यम्।

## ग्राहकमहोदयेभ्यो निवेदनम्।

सम्प्रति सर्वतः सर्वथा समेधमानेऽपि महर्घताव्यतिकरे वयं यथानियमं यथाकालञ्च सूर्य्योदयं यथाशक्ति यावच्छक्यं यथोपलब्धसामग्रीभि र्यथापूर्वमेव प्रकाशयामः। परन्तु कियतां ग्राहकमहोदयानां दयादृष्टिस्तादृशी समुत्साहवर्द्धिका न दृश्यते यथा पूर्वमासीत्। अद्यत्वे तु येषां ग्राहकाणां सूर्योदयग्राहकता समाप्ता विद्यते तेऽपि स्ववार्षिकशुल्कप्रेषणे शैथिल्यमवलम्बन्ते। बहूनां पार्श्वे तु बहुशः पत्राणि प्रेषितान्यपि भवन्ति, परमधुनापि ते वार्षिकं मूल्यं न प्रेषितवन्तः। तेषामुचितमस्ति यदन्येभ्योऽपि ग्राहकेभ्यः सूर्य्योदयशुल्कं गृहीत्वाऽत्र प्रेषयन्तु स्वशुल्कप्रेषणस्य कृते तु किमपि तेभ्यः वक्तव्यस्यैव प्रयोजनं नासीत्। परन्तु तेषामौदासीन्येनास्य कार्य्यालयस्य महती क्षति र्भवितुमर्हति। वी० पी० प्रेषणेऽपि तेषां व्ययाधिक्यमेव भवति। बहवश्च महाभागा गतमपि वी० पी० पत्रं स्वगृहात् प्रत्यावर्तयन्ति। यतश्च द्विगुणिता हानिर्जायते। अतश्च ग्राहकमहोदयेभ्यो निवेदनमस्ति यत्ते स्वस्वशुल्कं शीघ्रमेव मनियार्डर-(धनादेशपत्र) द्वारा शीघ्रं सम्प्रेष्य स्वग्राहकतारक्षणं कुर्वन्तु। आशास्महे सुरभाषासमुन्नतिसमभिलाषुकाः श्रीमन्तो ग्राहकमहानुभावाः नूनं ध्यानं दास्यन्तीति।

## चण्डी।

इयं हि हिन्दीभाषामयी मासिकपत्रिका प्रयागस्थ-शाक्तसम्मेलनस्य मुखपत्रिकारूपेण पं० ठाकुरदत्तमिश्रमहाशयस्य सम्पादकत्वे चण्डीकार्य्यालय, कटरा, प्रयाग, इति स्थानात् पञ्चपेभ्यो मासेभ्यो निरन्तरं नियमतः सर्वाङ्गसम्पन्ना मासान्ततिथौ प्रकाशिता भवति।

वर्णाश्रमधर्मणां पञ्चविधा हि मुख्योपासनापद्धतिर्विद्यते। तदनुसारतः पञ्च मुख्याः सम्प्रदाया अनादिकालत एवेह भारते प्रचलिता भागीरथीप्रवाहवदविच्छिन्नगतयः सर्वत्र भारते प्रसृताः सन्ति। यथा—१ गाणपत्यसम्प्रदायः, २ सौरसम्प्रदायः, ३ वैष्णवसम्प्रदायः, ४ शैवसम्प्रदायः, ५ शाक्तसम्प्रदायश्चेति। इमे सर्वेऽपि सम्प्रदायाः स्मृतिपुराणतन्त्रशास्त्रेषु समाम्नाताः सन्ति। अतश्चेमे सर्वेऽपि सम्प्रदाया अनादिपरम्परया प्रसृता इति कथने नास्ति सङ्कोचः।

तत्रैषु सम्प्रदायेषु गाणपत्य-सौरसम्प्रदाययोः प्रचारविस्तारो बहुवर्षैतः शिथिलतामाश्रितो दृश्यते । परन्तु अन्येषां शैव-शाक्तवैष्णवसम्प्रदायानान्तु प्रचारः कदापि न शैथिल्यं जगाम प्रत्युताधुना सर्वत्रैव भारते सर्वथा सर्वतः प्रसृत एवावलोक्यते । केवलं शाक्तसम्प्रदायस्य विस्तारो यद्यपि काश्मीर-बङ्गाल-मिथिला-नेपालादि पश्चिम-पूर्वोत्तरप्रदेशेषु बाहुल्येन समुपलभ्यते तथापि तदुपासकमण्डलीनां साधु सुदृढ-सङ्घटनस्याभावात् अद्यावधि कियन्मात्रया शैथिल्यमाश्रित इवावलोक्यतेस्म ।

परन्तु सम्प्रति भारते शक्तिसमेधनार्थं सर्वथा यतमाने "महाशक्तिः सुप्ता भजतु परिबोधं भगवतो" इति प्रतिजनं शब्दायमाने शक्तिदेव्याः कृपाकटाक्षपातेनैव विगतमहाकुम्भावसरे प्रयागस्थप्रख्यातवाकीलानां श्रीमतां पण्डित शिवनाथकाटजू-एम० ए० एल० एल० बी० एडवोकेटमहोदयानां तदनुयायिनाञ्चान्येषां शाक्त-सम्प्रदायानुरागिणां धार्मिकप्रवराणां सज्जनानां प्रबलाध्यवसायेन शुभोद्योगेन च शाक्तसम्मेलनस्य सङ्घटनसुव्यवस्था समजनि ।

ततः प्रभृति तत्समुद्योगत एव 'चण्डी' नाम्नी हिन्दीभाषामयी मासिकपत्रिका सर्वाङ्गसम्पन्ना प्रतिमासं चण्डीकार्यालय, कटरा, प्रयाग इति सङ्केतेन प्रकाशीभवन्ती सर्वेषामेव शक्ति-शैव-वैष्णवादिसम्प्रदायानां समुपकारमादधाति । सर्वथा तत्तत्सम्प्रदायसमेधने साहाय्यमाचरतीति ।

शाक्तसम्प्रदायो हि सर्वसम्प्रदायानां मूलभूतो वैदिकपद्धत्या 'सर्वे शाक्ता द्विजाः प्रोक्ता न शैवा न च वैष्णवाः' इत्यादि प्रामाण्यतो गायत्र्यपरपर्य्यायायाः शक्तिदेव्याः समुपासनया सर्वसम्प्रदायानामेव समुपयोगमाचरति साहाय्यञ्चातनोतीति ।

अतएव सम्प्रति सर्वेषामेव विज्ञानां भारतीय-संस्कृति-समेधनप्रियाणां शाक्त-सम्प्रदायसमुपोद्बलने प्रयासो दृश्यते । कियन्ति एव वर्षाण्यतिगतानि काशीस्थैः महामहाध्यापकैस्त्यक्तमहामहोपाध्यायपदपदवीकैः स्वर्गीयैः श्रीमद्भिः पण्डितप्रवर पञ्चाननतर्करत्नमहोदयैरपि वेदान्तसूत्रोपरि शक्तिभाष्यं शाक्तसम्प्रदायानुसारि विरचितम्, तत् प्रकाशितं च विद्यते ।

अस्यां 'चण्डी' नाम्न्यां पत्रिकायां शाक्तसम्प्रदायसम्बन्धि-लेखातिरिक्ता विविधान्यसम्प्रदायधर्मसम्बन्धिनो लेखाः सर्वोपयोगिनः सर्वथा संग्राह्याः सर्व-पुस्तकालयवाचनालयशोभादायका भवन्ति । अस्याः पत्रिकायाः सम्पादकोऽपि विद्वान् धार्मिको महापुरुष एवास्ति ।

वयमस्याः पत्रिकाया दीर्घजीवनकामिनः सर्वशक्तिसम्पन्नाया अनन्तब्रह्माण्ड-नियामिकाया अघटनघटनापटीयस्या महामायायाः चरणसरोरुहयो र्बद्धाञ्जलयः

प्रार्थयामहे यदनवरतं नियमतो निस्सरन्तीयं पत्रिका सर्वसम्प्रदायजनहितमादधती चिरञ्जीव्यात्। अस्याः सञ्चालक-सम्पादकमण्डली च स्वोद्देश्ये दैनन्दिनं साफल्य-मासादयन्ती सर्वेषामेव सम्प्रदायानां प्रधानं साधनं कृत्वा पत्रिकामिमां प्रकाशयन्ती जगज्जनन्याः श्रीमदम्बिकायाः कृपापात्रतां गच्छेदिति।

———o———

## श्रीभारतधर्ममहामण्डल बनारस द्वारा संचालित

### अखिलभारतवर्षीय-धार्मिकाध्यात्मिक-संस्कृत विश्वविद्यालयका

## परीक्षाफल सन् १९४२ ई०

### व्याकरण-आचार्य प्रथमश्रेणी

| रो० न० | परीक्षार्थिनाम | केन्द्रनाम |
|---|---|---|
| १९४ | रघुनन्दन प्रसाद | मुँगेर |
| | **व्याकरणशास्त्री प्रथमश्रेणी** | |
| ३४४ | कुमारी वसुमती रतिलाल शाह | अहमदाबाद |
| | **द्वितीय श्रेणी** | |
| १२८ | ऋषिपाठक | अमवां वथना ( सारन ) |
| | **व्याकरणमध्यमा द्वितीयश्रेणी** | |
| २०२ | श्रीकैलाश पाठक | मुँगेर |
| २८८ | श्यामसुन्दर शर्मा | मुकुन्दगढ़ ( जयपुर ) |
| | **तृतीयश्रेणी** | |
| १४६ | कृष्णवल्लभ पाठक | संस्कृतमहाविद्यालय आरा |
| ३३३ | रामचन्द्र चक्रवर्ती | भेदो |
| | **व्याकरणप्रथमा द्वितीयश्रेणी** | |
| ११ | कमलाकान्त पाठक | शिवपुर दीयर-बलिया |
| ५६ | हीरालाल हरगोविन्द जोशी | वडाली ( इडरस्टेट ) |
| १५७ | हेमन्तकुमार वर्मा | शाहजहाँपुर |
| १८२ | देवकीनन्दन मिश्र | खुदागंज-शाहजहाँपुर |
| २७० | विद्यार्थी मायादत्त शर्मा थपलियाल | भरतमहा वि० हृषीकेश (देहरादून) |
| २९२ | कलाधर त्रिपाठी | चरखारी स्टेट |
| ३३१ | विजय कृष्ण आचार्य | भेदो |
| | **तृतीयश्रेणी** | |
| २३ | अम्बादत्त शाण्डिल्य | नवीपेठ उज्जैन |
| १२५ | राजकिशोर उपाध्याय | अमवां वथना ( सारन ) |

| रो० न० | विद्यार्थि नाम | केन्द्र-नाम |
|---|---|---|
| २३८ | टहलदास शर्मा | जगद्भास्कर ज्यौतिषसंस्थान यशवन्त-गंज ( इन्दौर ) |
| २६९ | नारायणदत्त शर्मा | हृषीकेश |
| ३२१ | रामचन्द्र शर्मा | बुलन्दशहर |
| ३९२ | यमुनाप्रसाद शर्मा | ,, |
| ३९३ | शंकरदेव शर्मा | ,, |
| ३९४ | रामसिंह शर्मा | ,, |
| ३९५ | मदनलाल शर्मा | ,, |
| ३३६ | दुर्गापद उत्थासनी | चूरू ( बीकानेर ) |

### साहित्य-आचार्य प्रथमश्रेणी

| | | |
|---|---|---|
| ६२ | ब्रह्मचारी सर्वेन्द्र | श्रीकृष्ण ब्रह्मचर्याश्रम बरौली ( सारन ) |

### साहित्य-शास्त्री द्वितीयश्रेणी

| | | |
|---|---|---|
| १२ | बाबूलाल शुक्ल | नवीपेठ ( उज्जैन ) |
| ६४ | चक्रधर उपाध्याय | काशी |
| ३४० | पुरुषोत्तम व्यास | अहमदाबाद |
| ४३२ | ध्रुवदेव द्विवेदी | बरौली ( सारन ) |

### साहित्य-मध्यमा द्वितीयश्रेणी

| | | |
|---|---|---|
| १ | आल्लपल्लि नरुसय्य | संस्कृतपाठशाला वेमलवाड़ा (निजामस्टेट) |

### तृतीयश्रेणी

| | | |
|---|---|---|
| १६ | रामकृष्ण भण्डोरिया | नवीपेठ उज्जैन |
| ७९ | श्रीमाँगीलाल शर्मा | माफी आश्रम-देवास जूनियर |

### साहित्य-प्रथमा प्रथमश्रेणी

| | | |
|---|---|---|
| २४० | रामचरण लाल पाठक | यशवन्तगंज-इन्दौर |

### द्वितीयश्रेणी

| | | |
|---|---|---|
| ५९ | अमृतलाल गणपत राय | वडाली ( इडरस्टेट ) |
| ३४६ | माधव गणेश पानीकर | सोलापुर |
| ३४७ | अम्बऋषिदत्तोवा जगताप | सोलापुर |
| ३४८ | दिगम्बर संग्राम सूर्यवंशी | ,, |
| ३४९ | वासुकि बालकृष्ण महाजन | ,, |
| ३५० | शंकर दादा खंकाल | ,, |
| ३५१ | गोविन्दविष्णु पाठक | ,, |
| ३५२ | रामचन्द्र दत्तात्रेय तेली | ,, |

| रो० नं० | विद्यार्थि नाम | केन्द्र-नाम |
|---|---|---|
| ३५३ | रंगनाथ रामचन्द्र जोशी | सोलापुर |
| ३५४ | अनन्तकृष्ण जोशी | ,, |
| ३५६ | रामचन्द्र चन्द्रशेखर शिरसिकर | ,, |
| ५० | नटवरलाल महँगीलाल उपाध्याय | वडाली ( इडरस्टेट ) |

ज्यौतिष शास्त्री

| | | |
|---|---|---|
| २८९ | भवानीप्रसाद त्रिपाठी | चरखारी स्टेट ( जि० बान्दा ) |

ज्यौतिषमध्यमा द्वितीयश्रेणी

| | | |
|---|---|---|
| २३ | श्रीकामेश्वर मिश्र | चौहट्टा बाँकीपुर |
| १०४ | जगदीश चतुर्वेदी | बड़ा तेलपा ( छपरा ) |
| ३४१ | उमाशंकर वंशीलाल व्यास | अहमदाबाद |
| २४३ | बालमुकुन्द शर्मा | ज्यौतिषसंस्थान यशवन्तगञ्ज इन्दौर |

तृतीयश्रेणी

| | | |
|---|---|---|
| १४२ | नन्दकिशोर पाण्डेय | संस्कृत महाविद्यालय आरा |
| १९२ | गुप्तेश्वर पाठक | ,, |

ज्यौतिषप्रथमा प्रथमश्रेणी

| | | |
|---|---|---|
| २१८ | बाबूराम अवस्थी | संस्कृतपाठशाला कौंच |
| २१९ | सरयूप्रसाद गौतम | ,, |

द्वितीयश्रेणी

| | | |
|---|---|---|
| २१७ | रामस्वरूप उपाध्याय | कौंच जालौन |

वेदप्रथमा तृतीयश्रेणी

| | | |
|---|---|---|
| १९५ | श्रीरामेश्वर ठाकुर | मुंगेर |

वेद मध्यमा द्वितीयश्रेणी

| | | |
|---|---|---|
| ५२ | शुक्ल केदारलाल लाभशंकर | वडाली ( इडरस्टेट ) |
| ५४ | हीरालाल हरगोविन्द जोशी | ,, |

तृतीयश्रेणी

| | | |
|---|---|---|
| ५७ | भालचन्द्र गणपति शंकर दवे | वडाली ( इडरस्टेट ) |

कर्मकाण्ड मध्यमा तृतीयश्रेणी

| | | |
|---|---|---|
| ३७ | श्रीराधाकृष्ण मिश्र | चौहट्टा बाँकीपुर |

कर्मकाण्ड प्रथमा द्वितीयश्रेणी

| | | |
|---|---|---|
| ५३ | शुक्ल केदारलाल भाईशंकर | वडाली ( इडर स्टेट ) |
| ५५ | हीरालाल हरगोविन्द जोशी | ,, |
| ३५९ | रामगोपाल | चाँदपुर बिजनौर |

तृतीयश्रेणी

| रो० नं० | विद्यार्थि नाम | केन्द्र-नाम |
|---|---|---|
| २३९ | पुरुषोत्तम भटेले | यशवन्तगञ्ज इन्दौर |
| ३३९ | अच्युतानन्दकर शर्मा | चौरा ( मेदिनापुर ) |

धर्मशास्त्रप्रथमा प्रथमश्रेणी

| | | |
|---|---|---|
| ११६ | कान्तिलाल प्रभाशंकर जोशी | संस्कृत पाठशाला कुण्डला ( भावनगर स्टेट ) |

द्वितीयश्रेणी

| | | |
|---|---|---|
| ११८ | जोशी चम्पकलाल हरजीवन | " |
| ११९ | जोशी विष्णुराम हरजीवन | " |
| १२२ | वेनी रामशंकरलाल | " |
| १२३ | विद्यार्थी गजानन मोतीलाल पण्ड्या | " |

तृतीयश्रेणी

| | | |
|---|---|---|
| ११७ | दवे अम्बाशंकर शिवशंकर | " |
| १२१ | रतिलाल शिवशंकर जोशी | " |
| ३३७ | भूषणचन्द्र मिश्र | चौरा ( मेदिनापुर ) |

पुराणप्रथमा द्वितीयश्रेणी

| | | |
|---|---|---|
| ४९ | माँगीलाल गाँधी | वडाली इडर स्टेट |

तृतीयश्रेणी

| | | |
|---|---|---|
| २४५ | कन्हैयालाल शर्मा | यशवन्तगञ्ज इन्दौर |

पुराणप्रथमा तृतीयश्रेणी

| | | |
|---|---|---|
| ३३५ | प्रभासचन्द्र मिश्र | चौरा ( मेदिनापुर ) |

व्याख्यानप्रथमा प्रथमश्रेणी

| | | |
|---|---|---|
| ३७१ | चित्तसन्त वर्मा ( देवरा ) | चाँदपुर ( बिजनौर ) |

द्वितीयश्रेणी

| | | |
|---|---|---|
| ३७४ | बलकर्ण सिंह | " |
| ३७५ | योगेन्द्रनाथ | " |

आगममध्यमा द्वितीयश्रेणी

| | | |
|---|---|---|
| ३३४ | विमलाचरण छन्दोगी | चौरा ( मेदिनापुर ) |

सांख्यप्रथमा द्वितीयश्रेणी

| | | |
|---|---|---|
| ३०७ | मतिलाल राय | भेदो धर्मरक्षिणी सभा |

## इंग्लिश जूनियर प्रथमश्रेणी

| रो० न० | विद्यार्थि नाम | केन्द्रनाम |
|---|---|---|
| २९६ | बाबूराम त्रिपाठी | चरखारी स्टेट ( जि० बाँदा ) |

## हिन्दीविशारद प्रथमश्रेणी

| | | |
|---|---|---|
| ६ | बद्रीप्रसाद शर्मा | लखनऊ |
| १९९ | रामजीवन प्रसाद वर्मा | मुँगेर |

## द्वितीयश्रेणी

| | | |
|---|---|---|
| ३० | लक्ष्मीनारायण सेठ | चौहट्टा बाँकीपुर |
| ३१ | श्रीउमेश झा | ,, |
| ३२ | श्रीचन्द्रकान्त मिश्र | ,, |
| ६१ | मित्रानन्द शर्मा | वडाली इडरस्टेट |
| १९७ | श्री छोटन मिश्र | सनातनधर्म संस्कृत कालेज मुंगेर |
| १९८ | श्रीचिरंजीव ठाकुर | ,, |
| २०० | अनिरुद्ध ठाकुर | ,, |
| २०१ | श्री जगदीश झा | ,, |
| २०५ | जानकी प्रसादमिश्र | लखनऊ |
| २७६ | जगतराम मण्डल | संस्कृतसाहित्य परिषद् विद्यालय नयागाँव ( भागलपुर ) |
| २७७ | अनूपलाल सिंह | ,, |
| २७८ | रामचरित्र सिंह | ,, |
| २७९ | नरसिंह प्रसाद सिंह | ,, |

## तृतीयश्रेणी

| | | |
|---|---|---|
| ३ | चेवुटी साम्वय्य | संस्कृतपाठशाला वेमलवाडा (निजाम स्टेट) |
| १४५ | रामजीलाल | संस्कृतमहाविद्यालय आरा |
| १५३ | कपिलदेव ओझा | ,, |
| २०३ | मैकूलाल वर्मा | लखनऊ |
| २०६ | रामशंकर वर्मा | ,, |
| २८० | रामस्वरूप मण्डल | नया गाँव ( भागलपुर ) |
| २९८ | श्रीहरिनारायण शर्मा | काशी |
| ३२३ | बीरभद्र जोशी | उदयपुर |
| ४११ | नगेन्द्रधर द्विवेदी | सांगवेदविद्यालय हतवाबाजार, भटनी |
| ४१२ | कृष्णदेव मिश्र | गोरखपुर ,, |

## हिन्दीप्रथमा प्रथमश्रेणी

| | | |
|---|---|---|
| ८० | श्रीविश्वनाथ व्यास | माफी आश्रम ( देवास जूनियर ) |
| ८२ | श्रीरामचन्द्र रावल | " |
| ८३ | श्रीजानकीलाल भट्ट | " |
| ८५ | आनन्दीलाल उपाध्याय | " |
| ८८ | श्रीजमना दास वैष्णव | " |
| ९१ | श्रीनामदेवराय यादव | " |
| ९८ | शीतलपति सिंह | पुनपुन ( पटना ) |
| ९९ | जगतनारायण सिंह | " |
| २९४ | रामविशाल शुक्ल | चरखारी स्टेट |

## द्वितीयश्रेणी

| | | |
|---|---|---|
| ८१ | श्रीकेदारनाथ मेहता | माफी आश्रम देवास-जूनियर |
| ८४ | श्रीभागीरथ पुजारी | " |
| ८६ | नन्दकिशोर शर्मा | " |
| ८७ | श्रीजमनालाल जोशी | " |
| ९० | श्रीपाण्डुरंग जोशी | " |
| ९५ | परमेश्वरप्रसाद सिंह | पुनपुन ( पटना ) |
| ९६ | महेन्द्रप्रसाद सिंह | " |
| ९७ | युगेश्वरप्रसाद सिंह | " |
| २९३ | कुञ्जविहारी त्रिपाठी | चरखारी स्टेट |
| ४१३ | चन्द्रभानुशुक्ल | सांगवेद विद्यालय हतवा बाजार-भटनी गोरखपुर |
| ४१४ | रामहितप्रसाद दीक्षित | " |
| ४१५ | रामचन्द्र प्रसाद | " |

## तृतीयश्रेणी

| | | |
|---|---|---|
| ५ | दुर्गा देवी मेहरोत्रा | लखनऊ |
| ८९ | श्रीभगवती प्रसाद पुजारी | माफी आश्रम देवास जूनियर |

सेक्रेटरी

अ० भा० धार्मिकाध्यात्मिक संस्कृतविश्वविद्यालय,

महामण्डल भवन, जगतगंज बनारस ।

## श्रीभारतधर्ममहामण्डल बनारस द्वारा सञ्चालित

### अखिलभारतवर्षीय-धार्मिकाध्यात्मिक संस्कृत-विश्वविद्यालयान्तर्गत काशी आयुर्वेदसम्मिलनी ( यू० पी० गवर्नमेण्ट द्वारा रजिस्टर्ड )

## परीक्षाफल सन् १९४२ ई०

### आयुर्वेद-आचार्य द्वितीय श्रेणी

| रोल नम्बर | परीक्षार्थि नाम | नाम-केन्द्र |
|---|---|---|
| १३४ | देवताप्रसाद द्विवेदी | अमावां वथना ( सारन ) |
| १३५ | भागवत द्विवेदी | ,, |
| १३६ | सत्यनारायण पाण्डेय | ,, |
| १३७ | गणेशदत्त शर्मा | ,, |
| १३८ | यमुनाप्रसाद शुक्ल | ,, |
| १३९ | राजवंश ओझा | ,, |
| ४१७ | मथुरानाथ पुरोहित | कात्यायनी पीठ वृन्दावन |
| ४१८ | वृजनाथ मिश्र | ,, |
| ४२२ | चन्द्रकिशोर गुप्ता | छिवरामऊ ( फर्रुखाबाद ) |
| ४४८ | चन्द्रदत्त चतुर्वेदी | मैनपुरी |

### आयुर्वेद शास्त्री प्रथमश्रेणी

| रोल नम्बर | परीक्षार्थि नाम | नाम-केन्द्र |
|---|---|---|
| १५८ | रघुवीर सहाय शंखधर | खुदागंज शाहजहाँपुर |
| १८३ | ब्रजविहारीलाल शर्मा औदीच्य | ,, |
| १८४ | राधाकृष्ण सनाढ्य | ,, |
| २०७ | महाराम द्विवेदी | कोंच ( जालौन ) |
| २२० | अश्विनीकुमार देवनाथ | शिक्षाश्रम तिलुड़ी ( बाँकुरा ) |
| २२१ | मुरारिमोहन सेन | ,, |
| ३०३ | गोष्ठविहारी आचार्य | भेदो धर्मरक्षिणी सभा |
| ३९९ | वनमाली झा | नेपालराजकीय-संस्कृतमहाविद्यालय मटिहानी ( दरभंगा ) |

### द्वितीय श्रेणी

| रोल नम्बर | परीक्षार्थि नाम | नाम-केन्द्र |
|---|---|---|
| ४६ | तुलसीराम माहेश्वरी वैद्य | अष्टांग औषधालय विवार ( हमीरपुर ) |
| ४७ | रामकृपालु द्विवेदी | ,, |
| ४८ | परमानन्द त्रिपाठी | ,, |
| १०१ | दुर्गेश्वर मिश्र | चनकप ( गया ) |

| रो० नं० | परीक्षार्थि नाम | नाम-केन्द्र |
|---|---|---|
| १२९ | यमुना ओझा | राधाकृष्णसंस्कृतविद्यालय अमावाँ बथना ( सारन ) |
| १३० | वैद्यनाथ मिश्र | " |
| १३१ | कृष्णदेवमिश्र | " |
| १३२ | रामवचनमिश्र | " |
| १३३ | सूर्यमणि पाण्डेय | " |
| १४७ | सीताराम त्रिपाठी | संस्कृतमहाविद्यालय आरा |
| १४९ | त्रियुगी पाण्डेय | " |
| १५० | केशव उपाध्याय | " |
| १५२ | ब्रह्मेश्वर उपाध्याय | " |
| १५५ | नरोत्तमलाल बी० मेहता | लौंग बाजार हैदराबाद ( सिन्ध ) |
| १८९ | साँवरमल शर्मा | गूढ़ागौड़जी ( जयपुर स्टेट ) |
| १९३ | राधाकृष्ण प्रसाद | संस्कृतमहाविद्यालय आरा |
| २०८ | प्रेमनारायण मिश्र | कोंच ( जालौन ) |
| २०९ | हरिनन्दन शाण्डिल्य | " |
| २१० | चैतन्यदास गुप्ता | " |
| २११ | शिवकुमार पाण्डेय | " |
| २१२ | रामदयालु कश्यप | " |
| २१३ | परशुराम द्विवेदी | " |
| २२६ | रामशंकर मिश्र | रावलगंज-काल्पी |
| २३१ | मुंशीलाल शर्मा | खुर्जा |
| २३२ | रेवतीप्रसाद शर्मा | " |
| २३७ | श्रीनिवास रामकृष्ण व्यास | यशवन्तगंज ( इन्दौर ) |
| ३०२ | कालीशंकरसेन गुप्त | भेदो धर्मरक्षिणी सभा |
| ३१० | लालबिहारी द्विवेदो | काशी |
| ३११ | गोपालराय | " |
| ३१३ | शिवकुमार गौड़ | बुलन्द शहर |
| ३१४ | जानकीप्रसाद गौड़ | " |
| ३१५ | छोटेलाल गौड़ | " |
| ३१६ | रामजीलाल शर्मा गौड़ | " |
| ३१७ | रविशंकर गौड़ | बुलन्द शहर |
| ३७८ | मालीराम शर्मा | नारनौल ( पटियाला स्टेट ) |

| रो० नं० | परीक्षार्थि नाम | नाम-केन्द्र |
|---|---|---|
| ३७९ | प्रभुदयाल शर्मा | ,, |
| ३८४ | महावीरप्रसाद सुरेका | बीकानेर |
| ३८८ | नरेन्द्रपालसिंह | खुर्जा |
| ४०६ | त्रिवेणी पाठक | संस्कृतमहाविद्यालय आरा |
| ४०७ | सूर्यनाथ पाठक | ,, |
| ४०८ | नित्यानन्द शर्मा | चन्दौसी |
| ४०९ | कृष्णलाल गौड़ | ,, |
| ४१९ | गो० भोलानाथ | कात्यायनीपीठ वृन्दावन |
| ४२० | अमरनाथमिश्र | ,, |
| ४४६ | रघुवरसिंह | कुँवरलालसिंह ब्रह्मचर्याश्रम मैनपुरी |
| १२४ | राघवानन्द शर्मा | चन्दा ( गया ) |
| ९ | रूपकिशोर गौड़ | लखनऊ |

## आयुर्वेद शास्त्री ( वैद्यभूषण )

| | | |
|---|---|---|
| ६८ | कस्तूरीलाल शर्मा | हरिद्वार |
| ७० | प्यारेलाल शर्मा | ,, |
| १०६ | चेलारामकृष्ण महाराज घोष | लौंगबाजार |
| १०७ | ईश्वरलाल मथाराम तेजवानी | ,, |
| २५१ | सत्यनारायण शर्मा | गोंदिया |
| २५२ | लक्ष्मीनारायण भादूपोते | ,, |
| ३२४ | स्वामी केवलराम | उदयपुर |
| ३८९ | वैद्यनाथ पाठक | आजमगढ़ |
| ३९० | उमादत्त त्रिपाठी | ,, |
| ३९१ | दूधनाथ उपाध्याय | ,, |
| ४०१ | गोपालदास शंकरदास | लौंगबाजार ( हैदराबाद ) |
| ४०२ | पुरुषोत्तम अमृतलाल | ,, |
| ४४७ | पूर्णचन्द्र गोस्वामी | मैनपुरी |

## आयुर्वेद मध्यमा प्रथमश्रेणी

| | | |
|---|---|---|
| ४ | पुत्तनलाल शुक्ल | लखनऊ |
| ८ | गिरिजाशंकर द्विवेदी | ,, |
| १६० | हरिश्चन्द्र मिश्र | एम० एल० डी० संस्कृत महाविद्यालय खुदागंज शाहजहाँपुर |
| २२३ | श्रीअच्युतानन्द राय | शिक्षाश्रम तिलुड़ी |

| रो० नं० | परीक्षार्थि नाम | नाम-केन्द्र |
|---|---|---|
| २२४ | श्रीरामरञ्जन राय | शिक्षाश्रम तिलुड़ी |
| २२५ | श्रीतिनकौड़ी बक्सी | ,, |
| २४८ | रघुबीरप्रसाद द्विवेदी | सत्यनारायण मन्दिर गोंदिया |
| ३०० | परेशनाथ सरकार | शिक्षाश्रम तिलुड़ी। |
| ३०१ | शशधर चौधरी | ,, |
| | **द्वितीयश्रेणी** | |
| ७ | मैकूलाल त्रिपाठी | लखनऊ |
| १४ | नन्दकिशोर आचार्य | नवीपेट ( उज्जैन ) |
| ४२ | सुन्दरलाल लोधी | विवार ( हमीरपुर ) |
| ४३ | रघुवरदयाल निगम | ,, |
| १०३ | ब्रह्मदेव त्रिपाठी | बड़ा तेलपा ( छपरा ) |
| १०५ | लक्ष्मीनारायण विजयवर्गी | भोपाल |
| १६१ | रामभूषण गुप्त | एम० एल० डी० संस्कृत महाविद्यालय खुदागञ्ज शाहजहाँपुर |
| १६२ | सियाराम शंखधर | ,, |
| १६३ | दुर्गाशंकर गोस्वामी | ,, |
| १६४ | कृष्णगोपाल शर्मा | ,, |
| १६५ | रमेशन्द्र शंखधर | ,, |
| १६६ | राजेन्द्रकुमार गंगवारी | ,, |
| १६८ | रामकुमार पाण्डेय | ,, |
| १९० | सोमदत्त शर्मा | गूढ़ा गौड़जी |
| २१५ | रामगोपाल द्विवेदी | कोंच ( जालौन ) |
| २५० | रामपदार्थ शर्मा द्विवेदी | सत्यनारायण मन्दिर गोंदिया |
| २५७ | चन्द्रशेखरशर्मा पाण्डेय | श्रीभरतमहाविद्यालय हृषीकेश |
| २६० | विष्णुदत्त शर्मा | ,, |
| २६३ | पीताम्बरदत्त दैवज्ञभूषण | ,, |
| २६५ | कामक्षानारायण शर्मा | ,, |
| ३०४ | परितोषदास गुप्त | धर्मरक्षिणी सभा, भेदो ( बांकुरा ) |
| ३२८ | शिवचरण सिंह चौहान | कुँवर लालसिंह ब्रह्मचर्याश्रम मैनपुरी |
| ३२९ | मानसिंह चौहान | ,, |
| ३३० | शिवपालसिंह चौहान | ,, |
| ४४३ | रूपाल सिंह | ,, |

| रो० नं० | परीक्षार्थि नाम | नाम-केन्द्र |
|---|---|---|
| ४६० | चन्द्रचूड़ त्रिपाठी | काशी |
| ४२७ | भरतलाल श्रीवास्तव | बालाघाट ( सी० पी० ) |
| ४२८ | शारदासिंह मिश्री | ,, |
| ४३० | श्यामलाल जगन्नाथप्रसाद | ,, |
| ४३१ | व्रजलाल तिवारी | ,, |
| १५९ | हरिराम शर्मा | एम० एल० डी० संस्कृतमहाविद्यालय खुदागञ्ज शाहजहाँपुर |

## तृतीय श्रेणी

| रो० नं० | परीक्षार्थि नाम | नाम-केन्द्र |
|---|---|---|
| १३ | नन्दकिशोर ठाकुर | नईपेठ उज्जैन |
| ४१ | नारायणदास लोधी | विवार ( हमीरपुर ) |
| २७ | मांगीलाल माहेश्वरी | ,, |
| ६६ | रघुनाथप्रसाद शर्मा | हरिद्वार |
| १०० | दिनेश्वर पाण्डेय | चनकप ( गया ) |
| १२७ | इन्द्रजीत मिश्र | राधाकृष्ण संस्कृत विद्यालय अमवां-वथना ( सारन ) |
| १९६ | रामाश्रय पाठक | मुंगेर |
| २१४ | प्रयागनारायण पाठक | कौंच |
| २२७ | गिरीशचन्द्र तिवारी | यू० पी० वजरंग औषधालय रावलगञ्ज (काल्पी) |
| २४९ | शीतलप्रसाद तिवारी | आयुर्वेदिक फार्मेसी गोंदिया |
| २५९ | भवानीदत्त शर्मा | श्रीभरतमहाविद्यालय हृषीकेश |
| २६२ | वालादत्त शर्मा पाण्डेय | ,, |
| २६९ | बालकिशन | ,, |
| २८६ | गोकुलप्रसाद गौड़ | चन्दौसी |
| २८७ | चिरञ्जीलाल सुरोलिया | मुकुन्दगढ़ ( जयपुर ) |
| २९९ | कृष्णदत्त वैद्य | विष्णुपुर मठ ( गया ) |
| ३१८ | विश्वम्भरदयाल शर्मा वाशिष्ठ | वुलन्द शहर |
| ३१९ | राधाकृष्ण शर्मा | ,, |
| ३२० | रामप्रसाद शर्मा | वुलन्द शहर |
| ३५८ | बाबूलाल त्रिपाठी | संस्कृत पाठशाला कौंच |
| ३८३ | नौरंग शर्मा | हनुमान् संस्कृतविद्यालय ( वीकानेर ) |
| ४०० | गोविन्दराम ठाकुरदास | लौंग बाजार ( हैदराबाद सिन्ध ) |
| ४०५ | भागीरथ सुरोलिया | सनातनधर्म स्कूल मुकुन्दगढ़ (जयपुर) |

| रो० न० | परीक्षार्थि नाम | नाम-केन्द्र |
|---|---|---|
| ४१० | पुरुषोत्तम शर्मा पंचवन्दी | चन्दौसी |
| ४४२ | यशवन्तसिंह | श्रीकुंवरलाल सिंह ब्रह्मचर्याश्रम मैनपुरी |
| ४४४ | श्यामसुन्दर त्रिवेदी | " |
| ४४५ | तारा देवी | " |

## आयुर्वेद प्रथमा प्रथमश्रेणी

| रो० न० | परीक्षार्थि नाम | नाम-केन्द्र |
|---|---|---|
| १६९ | रघुनन्दन प्रसाद अग्निहोत्री | एम० एल० डी० संस्कृतमहाविद्यालय खुदागंज-शाहजहाँपुर |
| १७१ | रामेश्वर दयालु मिश्र | " |
| ३६८ | रामकृष्ण मिश्र | चाँदपुर बिजनौर |
| ३६९ | काशीनाथ सारस्वत | " |

## द्वितीय श्रेणी

| रो० न० | परीक्षार्थि नाम | नाम-केन्द्र |
|---|---|---|
| १८ | वृजमोहन मेहता | नवीपेठ-उज्जैन |
| २० | चिन्तामणि विष्णु साठे | " |
| २१ | चन्द्रशेखर शर्मा | " |
| २२ | अमृतलाल पण्ड्या | " |
| ६५ | देवीप्रसाद शर्मा | विष्णुघाट, हरिद्वार |
| ६७ | रामनिवास शर्मा | " |
| ६९ | सीताराम शर्मा | " |
| १७० | रविशंकर उपाध्याय | एम० एल० डी० संस्कृत महाविद्यालय खुदागंज-शाहजहाँपुर |
| १७२ | हेतराम शर्मा | " |
| १७३ | जानकीप्रसाद पाठक | " |
| १७६ | रामाधार शंखधर | " |
| १७७ | उमाचरण उपाध्याय | " |
| १७८ | श्रीकृष्ण उपाध्याय | " |
| १७९ | गुरुदयाल पाण्डेय | " |
| १८० | बाबूराम वाजपेयी | एम० एल० डी० संस्कृत महाविद्यालय खुदागंज ( शाहजहाँपुर ) |
| १८१ | व्रजविहारीलाल शर्मा | " |
| २७५ | पुरुषोत्तमप्रसाद शर्मा | भण्डारा |
| ३०६ | हरिपदसिंह वर्मा | धर्मरक्षिणी सभा मेदो |
| ४०४ | खजूमल ज्येष्ठानन्द | लौंगबाजार हैदराबाद ( सिन्ध ) |

| रो० नं० | परीक्षार्थि नाम | नाम-केन्द्र |
|---|---|---|
| ४३४ | ठाकुर दयाराम वर्मा | कुँवरलालसिंह ब्रह्मचर्याश्रम मैनपुरी |
| ४३५ | कामताप्रसाद ज्योतिर्विद् | ” |
| ४४० | रामदुलारेलाल मिश्र | ” |
| ४५२ | रामशरण वैद्य | वेलनगंज-आगरा |
| ४५३ | नरसिंह | ” |
| ४६१ | हरिदत्तशर्मा भट्ट | हृषीकेश |

## तृतीय श्रेणी

| रो० नं० | परीक्षार्थि नाम | नाम-केन्द्र |
|---|---|---|
| १७ | सत्यनारायण सिंह | नवीपेठ-उज्जैन |
| १९ | दाऊलाल जोशी | ” |
| १८६ | बाबूलाल परसाई | होशंगाबाद |
| १८७ | मुरलीधर वरगले | ” |
| २७३ | रूपचन्दपटेल | भण्डारा |
| २८२ | मुंशीराम शर्मा सनाढ्य | चन्दौसी |
| २५३ | भोलानाथ शर्मा सनाढ्य | ” |
| ३२७ | रामबीरसिंह चौहान | मैनपुरी |
| ३४३ | रामशंकर पाठक | अहमदाबाद |
| ४०३ | हरिचन्द्र रामचन्द्र | लौंगबाजार हैदराबाद |
| ४२१ | बद्रीप्रसाद गुप्ता | भण्डारा |
| ४२३ | नाथूराम शर्मा | बालाघाट ( सी० पी० ) |
| ४२४ | कन्हैयालाल जायसवाल | ” |
| ४२६ | बाबूलाल श्रीवास्तव | ” |
| ४३३ | विष्णुसिंह | कुँवरलालसिंह ब्रह्मचर्याश्रम मैनपुरी |
| ४३६ | घमण्डीलाल पाठक | ” |
| ४३७ | रामनारायण | ” |
| ४३८ | उमाशंकर मिश्र | ” |
| ४३९ | कृष्णमुरारि पाण्डेय | मैनपुरी |
| ४४९ | कुँवरसेन पाठक | वेलनगंज-आगरा |
| ४५० | चिरंजीलाल उपाध्याय | ” |
| ४५१ | तुकाराम शर्मा वैद्य | ” |
| २६४ | इन्द्रदेव शर्मा लेखक | हृषीकेश |

ज्योतिश्चन्द्र भट्टाचार्य कविराज
सेक्रेटरी
काशी आयुर्वेद संमिलनी, महामण्डल भवन, जगतगंज, बनारस।

# मृतकश्राद्धसिद्धिः

निबन्धा—पं० श्रीदीनानाथशर्मा शास्त्री सारस्वतः
विद्यावागीशः, विद्याभूषणः
सनातनधर्म-संस्कृत-कालेज, मुलतान

( क्रमागता )

एवं गुरौ किञ्चित् पारलौकिकं कर्म्म कर्त्तुमस्वास्थ्यादिना अशक्ते सति, यदि शिष्यस्तत्कर्म्म कुर्यात्; तदापि गुरोः फलं मन्यते। तथा चोक्तं न्यायदर्शने—"अशक्तो विमुच्यते-इत्येतदपि नोपपद्यते। स्वयमशक्तस्य बाह्यां शक्तिमाह—अन्तेवासी जुहुयाद् ब्रह्मणा ( वेदाध्यापनेन ) स परिक्रीतः, क्षीरहोता वा जुहुयाद् धनेन स परिक्रीतः' ४।१।६० । एतेन पर-( शिष्यादि ) कृतकर्म्मणापि स्वस्य ( गुर्वादिकस्य ) पारलौकिकफलं सिद्धम्, यतो हि ४।१।४४ न्यायसूत्रभाष्ये हवनं स्वर्गादिपारलौकिकफलार्थं मतम्। एवं बोधायनीयपितृमेधसूत्रेऽप्युक्तम्—'अथ यदि आर्तस्य अग्निहोत्रं * विच्छिद्येत, यदि अस्य पुत्रो वा अन्तेवासी वा अलंकर्म्मणः स्यात्, सो······ऽग्नीन् विहृत्य······पुरोडाशमष्टाकपालं निर्वपति शरावं दक्षिणां ददाति' १।१।११ एवं यदा पारलौकिकं कर्म्म एकस्य अन्यो विधातुं शक्तः, एकेन च कृतस्य तस्य अन्येन परलोके फलं प्राप्तुं शक्यम्; तर्हि पुत्रक्रियमाणश्राद्धकर्म्मणा पितुः पारलौकिकफले का नाम बाधा अवशिष्टा।

केचिद् वादिनः 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात् स्वयं प्रयोगे स्यात्' ३।७।१८ इति मीमांसासूत्रेण एकस्य कर्म्मणः फलमन्यस्य न भवतीति साधयन्ति। तत्र तैरापातज्ञानशालिभिर्ज्ञेयं यदिदं सामान्यशास्त्रम्। यदि इदं न नियम्येत× तर्हि कोऽपि स्वयमालस्यादिवशाद् आत्मनः कृते कर्म्माणि कुर्यादेव न, धनादिप्रदानद्वारा सदा अन्येनैव कारयेत् स्वोद्दिष्टकर्म्माणि। एतद्धानिमुपलक्ष्यैव मीमांसाकार इदं सामान्यशास्त्रम् जग्रन्थ। विशिष्टशास्त्रावसरे मीमांसाकृता स्वयमेककर्म्मणा अन्यस्य फलं सूत्रितम्। तथा च—

'अन्यो वा स्यात् परिक्रयाम्नानाद् विप्रतिषेधात् प्रत्यगात्मनि' ३।७।२० इति सूत्रे परिक्रीतैः, वृतैः, मूल्यलब्धैः, भृत्यवत् स्थितैर्वाऽपि कृतस्य कर्म्मणः स्वस्य फलप्राप्तिः सूचिता। परिक्रयादिः स्वस्माद् भिन्ने एव भवति। द्रव्येण परिक्रीतैः कृते स्वयमेव

* अत्र तकारो न हलन्तः।

कृतं भवति यदि, यदि च मूल्यक्रीतोऽन्यः स्वकीयः, तत्कर्म्म च स्वकीयं भवति, यथा च ३।८।१ सूत्रे शावरभाष्ये उक्तम्—'फलकामो हि यजमानः...स यदि परिक्रीणीते ( ऋत्विजः ), ततः स्वयं सर्वं करोतीति गम्यते"। 'मम वर्चोऽस्तु-इत्यपि यजमानस्य वर्चो ममेति व्यपदिशति ( अध्वर्युः ) ३।८।२६ लिङ्गमप्यमुमर्थं दर्शयति। एवं हि आह—'यां वै काञ्चन ऋत्विज आशिषमाशासते, यजमानस्यैव सा' मीमांसा ३।८।२७; एवं यदि मूल्यक्रीतत्वादिनाऽन्यस्य स्वकीयता भवति; तर्हि पुत्रस्तु विनैव मूल्यं स्वकीयः, पालनपोषणादिना वा स्वकीयः, तर्हि तेन पुत्रेण कृतस्यापि कर्म्मणः फलं पितरि अवश्यं भवेद्-इति आर्यमानिभिरार्यमुनिप्रभृतिभिरवश्यज्ञेयम् ।

अथवा यदि 'उत्सर्गे तु प्रधानत्वात् शेषकारी प्रधानस्य' ३।७।१९ इति सूत्राद् 'उत्सर्गे प्राधान्यमस्ति । कथम् ? । य उत्सर्गं करोति, तेन सर्वं कृतं भवति...तस्माद् उत्सर्गमात्रं स्वयं कुर्यात्, शेषमन्यः स्वयं वा' इति तदीय-शाबरभाष्यानुरोधात् 'तस्मादन्यैः परिक्रीतैः शेषाः पदार्थाः कर्त्तव्याः, उत्सर्गं तु स्वयं कुर्वता सर्वं स्वयं कृतं भवती'ति ३।७।२० सूत्रभाष्योपसंहाराच्च 'अन्यो वा-' इति ३।७।२० सूत्रं शेषकृते एव अन्यविनियोगपरं × मन्येत, नोत्सर्गकृते; तथापि नैतेन सनातनधर्म्मणां हानिः । यतः-सनातनधर्म्मः पितरं नैतद् आदिशति यद्भवता स्वकृते किमपि न कर्त्तव्यं जीवने पारलौकिकम् ; भवन्मरणे भवत्कृते भवत्पुत्रः सर्वं करिष्यतीति। न ह्येवम् । प्रत्युतसनातनधर्म्मस्तु पितरं जीवने स्वपारलौकिककार्य्याणि कारयति, तानि उत्सर्गरूपाणि ज्ञेयानि; तत्र स्वयं तस्य सत्ता आवश्यक्येव मता । ततः 'शेषस्य अन्य एव स्यात् कर्ता' ३।७।२० इति मीमांसासिद्धान्तात् तच्छेषभूतं श्राद्धादिकर्म पुत्र एव करोति; तस्य च फलं स मृतकः पिता मीमांसादिशा स्वयं प्राप्नुयाद्-इति प्रागुक्तमेव तस्मात् 'शास्त्रफलं प्रयोक्तरि' ३।७।१८ इति सूत्रस्य सामान्यशास्त्रतैव सिद्धा, प्रत्युत पूर्वपक्षतैवाऽस्य सूत्रस्य । सिद्धान्तस्तु २० सूत्रम् ।

अत एव वैशेषिकदर्शनस्य ६।१।५ सूत्रोपस्कारे 'शास्त्रदेशितं फलमनुष्ठातरि' इति जैमिनीयसूत्रे इयं शङ्कोपस्थापिता—'ननु नोऽयं नियमः ( मी० ६।७।१८ ) पुत्रेष्टि-पितृयज्ञादौ व्यभिचारात्। तथापि—पुत्रेण कृतस्य श्राद्धादेः पितरि फलश्रवणात् , पित्रा च कृतायाः पुत्रेष्टेः पुत्रे फलश्रवणात्......'। एतच्छङ्काया उत्तरमसुनैव इत्थं प्रोक्तम्—'शास्त्रदेशितं फलनुष्ठातरि' इत्यस्य उत्सर्गत्वात्—( सामान्यशास्त्रत्वात् ) । क्वचिद् बलवता बाधकेन अपोद्यत्वात्। प्रकृते च पितृ-पुत्रगतफलश्रवण-

× अत्र तकारो न हलन्तः ।

स्यैव बाधकत्वात्। तथा सति अतिप्रसङ्ग इति चेन्न—तादृशश्रुतेरेव अतिप्रसङ्गनिवारकत्वात्।" एतेन अस्मत्सिद्धान्तस्य पुष्टिः सम्पन्ना, यतो हि—'सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्। परेण पूर्वबाधो वा स ह्यस्य प्रत्यनन्तरः'।

फलतो यथा आचार्य्यशिष्ययोः सम्बन्धाद् न्यायदर्शन ४।१।६०, बोधायनीयपितृमेध सूत्र १।१।११ प्रभृतिप्रमाणैः शिष्यकृतपारलौकिककर्म्मणः फलं परलोके गुरुः प्राप्तुं शक्तः, तथा* पितापुत्रयोरपि परस्परसम्बन्धात् पुत्रकृतकर्म्मणः फलं पिता प्राप्तुं शक्तः। तयोः सम्बन्धमाचक्षाणानि प्रमाणानि तु इमानि। तथा च—'पितापुत्रयोरेकात्मकत्वात्' ऐतरेयोपनिषदः शाङ्करभाष्ये २।४ आत्मा हि जायते तस्या तस्माज्जाया भवत्युत' महाभारते वनपर्व्वणि १२।७२ 'आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम्' श्रीमद्भागवतपुराणे १०।७८।३५ 'आत्मा वै पुत्रनामासि' बोधायनगृह्यसूत्रे २।१।४, गोभिलगृह्यसूत्रे २।८।२१, मं० ब्रा० १।५।१७,१८ 'पतिर्भार्य्यां सम्प्रविश्य गर्भो भूत्वेह जायते। जायायास्तद्धि जायात्वं यदस्यां जायते पुनः' मनु० ९।८ 'पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते। तज्जाया जाया भवति यदस्यां जायते पुनः' ऐतरेयब्राह्मणे ७।१४ 'आत्मा पुत्रश्च विज्ञायते' महाभारते अनुशासनपर्व्वणि ४९।३ इत्यादि।

अन्यदपि द्रष्टव्यम्—संस्काररूपकर्म्माणि करोति तु पिता; परं फलं भवति पुत्रस्य। पुत्रो दानं करोति, तद्धनं पुत्रेण स्वयं नाऽर्जितं किन्तु पित्रा। तथापि पुत्रस्यैव फलं भवति। अन्यथा दानं व्यर्थम्। पत्नी करोति दानादिकर्म्म; न तद्धनं तया अर्जितम्, किन्तु † तत्पतिना। अत एव मीमांसादर्शने उक्तम्—'ननु यदनया (पत्न्या) भक्तोपसर्पणेन वा, कर्त्तनेन वा धनमुपार्जितम्, तेन यक्ष्यते—इति, उच्यते—'तदपि अस्या न स्वम्, यदा तु सा अन्यस्य स्वभूता, तदा यत् तदीयम्, तदपि तस्यैव (पत्युः), अपि च स्वामिनस्तया कर्म कर्त्तव्यम्; न तत् परित्यज्य स्वकर्म्म अर्हति कर्तुम्; यत् तया अन्येन प्रकारेण उपार्ज्यते, तत् पत्युरेव स्वं भवितुमर्हति। एवञ्च स्मरन्ति—भार्य्या दासश्च पुत्रश्च निर्द्धनाः सर्व एव ते। यत् ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्' मी० ६।१।१२ 'स्मृतिप्रामाण्याद् अस्वया तया भवितव्यं फलार्थिन्याऽपि।' मी० ६।१।१३ तर्हि वाच्यं यत्—पत्न्या भवति दानकरणफलं नो वा? । यदि भवति; तर्हि तदन्यकृतस्य कर्म्मणः फलं पुत्रेण पत्न्या च प्राप्तम्।

* पितापुत्रयोः। 'आनङ् ऋतो–' इति सूत्रे 'पुत्रे अन्यतर–' इत्यतः पुत्रशब्दस्यानुवृत्त्या अत्र अनृदन्तेऽपि परे पितृशब्दस्याऽऽनङ्।

† तत्पतिना। समासत्वाद् विसञ्ज्ञा।

यदि तयोर्न भवति फलम्; तर्हि किं पुत्रः पत्नी च दानं वर्जयेयुः। अत एव तु स्वा० दयानन्देनापि लिखितम्—'किसी विशेषकारणसे स्त्री या पुरुष अग्निहोत्रके समय दोनों साथ उपस्थित न हो सके, तो एक ही स्त्री वा पुरुष दोनोंकी ओरका कृत्य कर लेवे अर्थात् एक २ मन्त्र को दो-दो बार पढ़ के दो दो आहुति करे' संस्कारविधौ २१० पृष्ठस्य टिप्पण्याम्। एतेन अन्यकृतकर्म्मणः फलमन्यस्यापि भवतीति सिद्धम्। एवं ४।१।४८ सूत्रे महाभाष्येऽप्युक्तम्—'यथैव हि असौ (पत्नी) अकुर्वती किञ्चित् पापं भर्तृकृतान् बन्धनादिक्लेशान् लभते' एतेन उक्तसिद्धान्तः (एकस्य कर्म्मणाऽन्यस्यापि फलमेलनरूपः) सत्यतामस्प्राक्षीत्।

ऋग्वेदे उक्तम्—'मा व एनो अन्यकृतं भुजेम' ६।५१।७ अनया निषेधप्रार्थनया प्रतीयते यद्-अन्यकृतकर्म्मणः फलमन्योपि प्राप्तुमीष्टे। 'प्राप्तौ सत्यां हि निषेधो भवति'। एवं 'माऽहं राजन्! अन्यकृतेन भोजम्, ऋ० २।२८।९ अत्रापि प्रतीयते यद्—अन्यकृतकर्म्मणा अन्यस्यापि फलं भवति, अन्यथा निषेधप्रार्थना वैयर्थ्यं वहेत्। एवं 'मा नो वधीः पितरं मोत मातरम्' ऋ० १।११४।७ अत्र पुत्रकर्तृकप्रार्थनारूपकर्म्मणा मातापित्रो रक्षणरूपफलप्राप्तिर्निदर्शिता।

अत एव साङ्ख्यदर्शने—'ननु कर्तुरेव लोके क्रियाफलयोगो दृष्टः, यथा सञ्चरत एव सञ्चारोत्थदुःखभोगः' इत्याशङ्क्य तत्र 'अकर्तुरपि फलोपभोगोऽन्नाद्यवत्' १।१०५ इति सूत्रितम्। तत्र भाष्यम्—'......कर्म्मफलस्यापि वृत्तेरुपभोगस्तदकर्तुरपि पुरुषस्य युक्तः। अन्नाद्यवत्। यथाऽन्यकृतस्याऽन्नादेरुपभोगो राज्ञो भवति; तद्वद् इत्यर्थः।' अथवा—यथा अन्नं वपति अन्यः; तस्य फलमन्योऽश्नुते, एवं वृक्षरोपणादिकमपि ज्ञेयम्। तेन एकस्य कर्म्मणः फलमन्यस्यापि भवितुमर्हतीति सिद्धम्।

'पञ्चौदनो ब्रह्मणे दीयमानः स दातारं तृप्त्या तर्पयति' अथर्व० ९।५।९ मन्त्रेऽत्र पञ्चौदनो दत्तो दात्रा ब्राह्मणाय, परं तृप्तिर्दातुर्दर्शिता। तेनाऽन्यस्य फलमन्योऽपि प्राप्तुं शक्तः—इति सम्यक् सिध्यति। अन्यथा तेन पञ्चौदनेन दत्तेन ब्राह्मणस्यैव तृप्तिर्भवेन्न खलु दातुः। अत्र दात्रा स्वोद्देशेन अन्यस्मै दत्तम्; तर्हि दाता मरणेऽपि तत् प्राप्स्यत्येव स्वयम्। यदि दाता अन्यस्य उद्देश्येन ब्राह्मणादिकाय किमपि ओदनादिकं दद्यात्; तर्हि तत्फलमपि अन्य एव प्राप्स्यति।

(क्रमशः)

# संस्कृतपर्यायशब्दानां, तदुत्पन्नानां

## भारतीयार्यभाषाशब्दानाञ्च

### तुलनात्मकसंग्रहस्यावश्यकता तदारम्भश्च

( ले०—श्रीवासुदेवद्विवेदी साहित्याचार्यः )

वाचं देवा उपजीवन्ति सर्वे वाचं गन्धर्वाः पशवो मनुष्याः।
वाचीमा विश्वाभुवनान्यर्पितानि सा नो हवं जुषतामिन्द्रपत्नी ॥१॥
( तै० ब्रा० २।८।८।४ )

ग्रन्थारम्भकारणम्

साहित्यदर्पणो नाम संस्कृतज्ञसुधीसमाजे नितरां प्रसिद्धो ग्रन्थः। एतद्ग्रन्थ-प्रणेता श्रीविश्वनाथ-कविराजमहाशयः आत्मानमष्टादशभाषावारविलासिनीभुजङ्ग इत्युपाधिविभूषितं निर्दिशति। अनेनैवानेकभाषाविचक्षणेन विदुषा षोडशभाषा-मय्याः "प्रशस्ति रत्नावली"—नामक पुस्तिकाया अपि रचना कृतेति नास्ति संस्कृत-साहित्येतिहासविदामविदितम्। इतः पञ्चवर्षेभ्यो वत्सरेभ्यः पूर्वमुक्तग्रन्थस्याध्ययन-काले तद्गतविषमस्थलानामुपरि सरलसंस्कृतभाषया टिप्पण्यो लिख्यन्ते स्म मया। तदानीमेव इदमपि मनसा संकल्पितमासीत्—यत् एतद्ग्रन्थस्याध्ययनान्ते टिप्पणी-रेताः पुस्तकरूपेण प्रकाशयिष्यामीति। एकदिने शनैः शनैः समुल्लिखितासु कासुचिद् विषमस्थलटिप्पणीषु तासां प्रकाशनोपायं विचिन्तयतो मे मनसि सहसा भाव एष समुत्पेदे यत्—मूलग्रन्थप्रणेतुरिव टिप्पणीकर्तुरपि अष्टादशभाषावारविलासिनी भुजङ्ग इत्युपाधिरभविष्यच्चेदध्यापकानामध्येतॄणाञ्च महानानन्दः कौतूहलञ्च जायेत। इदमेव विचारयतो मेऽभिलाषोऽयं समतीतेषु केषुचिद् दिवसेषु तथा दृढतामापेदे यथा तदारभ्यैव मयाऽपि गणयित्वाऽष्टादशभाषाशिक्षणस्य संकल्पस्तदारम्भश्च विहितः। साहित्यदर्पणप्रणेता विश्वनाथकविराज ईशवीयचतुर्दशशताब्द्यां जनि-मलभत। तस्मिन् काले तेन यासु यासु भाषासु वैदुष्यमासादितं तासामध्ययनं साम्प्रतमनावश्यकमसुकरं च विचार्य वर्तमानकाले पठनपाठनोपयुक्तानां पाली प्राकृतापभ्रंशादि प्राचीन भाषाणां, प्रतिप्रान्तं व्यवह्रियमाणानां च बंगला, उडिया, आसामी, गुजराती, मराठी, नैपाली, पंजाबी, राजस्थानी, काश्मिरीप्रभृतिभाषाणा-मेवाभ्यास आरब्धः। आचार्यपरीक्षां समाप्य मुख्यतोऽयमेव विषयो मया हस्ते गृहीतः। किञ्चित्कालानन्तरं भारतस्योत्तरभागे प्रचलन्तीषु भिन्नभिन्नभाषासु

(A. A. macedonal) इत्येतैर्वैदेशिकैः संस्कृतपण्डितैर्बहवः संस्कृतकोशाः सम्पादिताः। केवलं वैदिकशब्दानामपि वर्णक्रमेण संग्रहस्य प्रथमः प्रयासः स्मिट-ग्रासमन-महोदयाभ्यामेव कृत इति सर्वेऽप्येते संस्कृताभ्यासे यापितजीवना मनीषिणोऽस्मभ्यं भारतीयेभ्योऽतितरां श्लाघनीया अनुकरणीयाश्च सन्ति। अथैवं सर्वप्रथमं वैदेशिकैरेव विद्वद्भिरुपनिबद्धेषु कोशेषु पश्चाद् भारतीयैरपि–विशेषतो वङ्गीय महापुरुषैः संगृहीतास्त्रयः कोशाः संस्कृतभाषायाः सर्वापेक्षया महान्तः कोशा गण्यन्ते। ते च बृहद्वाचस्पत्यभिधानम्, शब्दकल्पद्रुमः, संस्कृतशब्दबहुलो "बँगला विश्वकोश"श्चेति सन्ति। एतदतिरिक्ता अन्येऽपि नानाविधा महान्तो लघवश्च सन्ति संस्कृत कोशाः प्रकाशिता येषां सर्वेषां नामोल्लेखेन प्रबन्धवृद्धिमाशङ्कमानोऽहमत्रैव विरमामि।

## २—पर्यायवाचिनां कोशानां त्रुटयः ।

उपरिनिर्दिष्टसंख्यानुसारं सत्स्वपि बहुषु अमरकोशादिषु पर्यायशब्दसंग्रहात्मकेषु कोशेषु किमर्थमयमारम्भः पर्यायसंग्रहस्येति प्रश्नः स्वभावत एवोदेति। अथ एतस्यैव प्रश्नस्य समाधानाय त्रुटिनिर्देशात्मकमिदं द्वितीयं प्रकरणमुपन्यस्यते। अस्मदधीतेषु पर्यायवाचिकोशेषु प्रायेण सर्वत्रैव सन्ति न्यूनाधिकरूपेण काश्चन त्रुटयो यासां निराकरणाय विधीयतेऽयं **"पर्यायविश्वकोशा"**ऽभिधस्य कोशस्य निर्माणप्रयत्नः। त्रुटयो निम्ननिर्दिष्टाः सन्ति।

**(क) वर्गीकरण-सङ्कीर्णता** नाम पर्यायवाचिकोशानां प्रथमा त्रुटिः। न कोऽप्येतादृशः कोशोऽवलोकितो यत्र एकैक-जातीयपदार्थानां कृते पृथक् पृथक् वर्गा उल्लिखिताः स्युः। प्रत्युत एकस्मिन्नेव वर्गे विभिन्नजातीयपदार्थानां संग्रहो विलोक्यते। यथाऽमरकोशस्यैकस्मिन्नेव मनुष्यवर्गे सम्बन्धशब्दाः शरीरशब्दाः रोगशब्दा अलङ्कारशब्दाः पर्यङ्क-कन्दुक-दीप-दर्पणादयः सर्वसाधारणोपकरणशब्दाश्च संगृहीताः सन्ति। इष्यते तु सम्बन्धवर्ग-शरीरवर्ग-रोगवर्ग-भूषणवर्गोपकरणवर्गनामभिः पञ्चानामपि वर्गाणां पृथग् निवेशनम्। एवमेव सिंहवर्गे एकस्मिन्नेव पशूनां पक्षिणां कीटपतङ्गादीनां च पर्यायनामान्युल्लिखितानि सन्ति। औचित्यं सौविध्यं च तु पशुवर्ग-पक्षिवर्ग-कीटपतङ्गवर्गनाम्ना वर्गाणां पृथक्करणे एवास्ति। परमेतादृशं वर्गीकरणं न कुत्रापि कोशे समुपलभ्यते। अस्मिन् कोशे पुनः सर्वेऽपि वर्गाः पृथक् पृथक् स्थास्यन्ति।

(अवशिष्टमग्रिमेऽङ्के)

———

## सूर्योदय नियमाः।

(१) सूर्योदयः प्रतिपूर्णिमं प्रकाशितो भवति। ये पञ्चरूप्यकात्मकं ५) वार्षिकं साहाय्यं करिष्यन्ति ते संरक्षका भवितुमर्हन्ति। वार्षिकं मूल्यं भारते मुद्रात्रयम् ३) बहिर्भारतञ्च मुद्राषट्कम् ६) भारते विद्यार्थिभ्यः १) रूप्यकेणैकेनेदं पत्रं प्रदीयते। सर्वत्रैव अग्रिमं मूल्यं गृह्येत।

---

२—धनादेशपत्र—( मनिआर्डर ) द्वारैव मूल्यप्रेषणं साधीयः। वी० पी० द्वारा प्रेषणे मूल्यादधिकम् आणकषट्कं।≈) पत्रग्राहकाणां लगिष्यति।

(३) ग्राहकैः प्राचीनैः स्वीया ग्राहकसंख्या, नवीनैश्च 'नवीनोऽहम्' इति लेख्यमेव। अन्यथा पत्रप्रेषणे तथाऽन्यव्यवस्थाविधाने च महान् विलम्बो भवेत्। येषां समीपे समुचितसमये सूर्योदयो न गच्छेत् तैः पत्रालये ( पोस्ट आफिस ) अन्वेषणानन्तरं शीघ्रं सूचना देया। धनादेश-( मनिआर्डर ) द्वारा स्वपूर्णसंकेतं सुस्पष्टं विलिख्य सूर्योदय-मूल्यं प्रेषणीयम्। अत्र विज्ञापनदाने महीयसो लाभस्य सम्भावना। विज्ञापननियमाः पत्रं प्रेष्य ज्ञेयाः। सूर्योदये मुद्रापणीयानि निबन्धादीनि तत्सम्बन्धिलिपिः, कार्यालय-व्यवस्थाविषयकलिपिश्च "कार्याध्यक्ष सूर्योदय-कार्यालय जगत्गञ्ज, बनारसकैण्ट" इति संकेतेन प्रेषणीया।

---

## लेखका विनिवेद्यन्ते।

१—त एव लेखा इह प्रकाश्यन्ते ये सुस्पष्टाक्षरा विरलपङ्क्तिकाः सरल-सरला भावपूर्णाश्छात्रोपयोगिनो भवन्ति। साहित्यिका धार्मिकाः सामाजिका ऐतिहासिका गवेषणासम्बन्धिनश्च प्रसादगुणगुम्फिता लेखाः प्रकाशने प्राथम्यमाश्रयन्ति। अतश्च लेखकैः लेखस्य भावसौष्ठवे मनोहरत्वे च ध्यानं देयं न तु शब्दकाठिन्यादिषु।

२—कविताश्च स्वल्पसंख्यका भावपूर्णा अपेक्ष्यन्ते न तु विंशत्यधिकाः।

३—असम्पूर्णलेखः 'क्रमशः' इति कृत्वा, लेखकमहोदयैर्न प्रेषणीयः, किन्तु पूर्ण एव।

४—अतिविस्तृताः विवादप्रधाना निबन्धा नास्मिन् पत्रे स्थानं लभेरन्। समागतानां लेखानां प्रकाशनाऽप्रकाशननिश्चये च सम्पादक एव प्रभवेत्। अस्वीकृता निबन्धाः परावर्तनव्यये ( चिटिका ) प्राप्ते परावर्तयितुं शक्येरन्।

---

Reg. No. A 156.

## ज्यौतिषमीमांसादर्शनम् ।

अस्मिन् ग्रन्थे दार्शनिकरीत्या ज्यौतिषफलानामुपपत्तिर्वर्णितास्ति । अधुना प्रचाराधिक्यार्थं मूल्यं ।-) ज्यौतिषविज्ञानस्य मूल्यम् -) शनिग्रहमन्त्रभाष्यस्य -) कुण्डलीनिरीक्षणौषिभिस्तया सह रूप्यकमेकं प्रेषणीयम् । प्राप्तिस्थानम्—राजकुमारगुरु ज्यौतिषालङ्कार ज्योतिर्भूषण दैवज्ञभूषण पण्डित तारादत्त राजज्योतिषी, रियासत जुब्बल, शिमला जिला ।

---

## सनातनधर्मग्रन्थाः ।

सनातनधर्मस्य सुप्रसिद्ध व्याख्यातृ स्वामिदयानन्दमहाराज विरचिताः ।

**धर्मविज्ञान**—ग्रन्थोऽयं सनातनधर्मस्य महत्त्वपरिचायकं विद्यते, सर्वविध-धर्मज्ञानलाभाय एकमेव पुस्तकमिदं पर्याप्तमस्ति । प्रथमभागस्य मूल्यम् २) ।

**गीतार्थचन्द्रिका**—अस्मिन् ग्रन्थे श्लोकानां हिन्दीभाषायाम् अर्थः गूढ़तात्पर्य-प्रदर्शनपुरस्सरं **ज्ञानकर्मोपासना**—काण्डत्रयस्य सामञ्जस्यं वर्तते । मूल्यम्—२।।) प्रेषणव्ययश्च पृथक् ।

**संन्यासधर्मपद्धतिः**—अत्र संन्यासग्रहणविधिः, संन्यासिनां भेदाः विस्तृता वर्णिताः सन्ति । साधुमहात्मनां कृते परमपयोगि पुस्तकमिदम्, मूल्यम् १) प्रेषणव्ययः पृथक् । प्राप्तिस्थानम्— सेक्रेटरी

श्रीभारतधर्ममहामण्डल, जगतगंज, बनारस ।

---

## विद्यार्थिग्राहकेभ्यो निवेदनम् ।

असमर्थेभ्यो विद्यार्थिग्राहकेभ्यः सूर्योदयो वर्षं यावत् एकेनैव रूप्यकेण दीयते । सूर्योदयमुद्रणे प्रेषणे च कियान् व्ययो जायते, इति विवेचकाः पाठका जानन्त्येव । तथापि एकरूप्यकमेव नाममात्रं वार्षिकं गृह्यते । अतश्च विद्यार्थिभिः सत्वरमह-मिकया एव नूनं ग्राहकैर्भाव्यम् । यैरधुनापि वार्षिकं मूल्यं न प्रेषितं तैः स्वकीयं देयं मासाभ्यन्तर एव नूनं प्रेषणीयम् । अन्यथा मन्त्रिसभया निश्चितमिदं यत्येषां वार्षिकं अग्रिमं नागमिष्यति तेषां पार्श्वे सूर्योदयो न प्रेषयिष्यते ।

निवेदकः—

कार्याध्यक्ष—सूर्योदयकार्यालय, जगतगंज, बनारस ।

---

Printed at the Shri Lakshmi Narayan Press, Jatanbar, Benares,
and Published by the Bharatdharma Mahamandal, Jagatganj, Benares Cantt.
by Pt. A. P. Sharma.

॥ ॐ तत्सत् ॥

# सूर्योदयः ।

## त्रैभाषिको विशेषाङ्कः ।

अष्टादशे वर्षे १८ | भाद्र पूर्णिमायाः १९९९, सितम्बर १९४२ । | तृतीया संख्या


## योगसाधनं भक्तिश्च ।

सनातनधर्मानुसारेण वेदशास्त्रादिषु योगसाधनभक्तिलक्षणानि यानि समुपलक्ष्यन्ते तानि सर्वजीवहितकारीणि सन्ति । संसारे वैदिकावैदिकसम्प्रदायमतमतान्तरेषु किमपि मतमतान्तरं सम्प्रदायो वा नेदृशो विद्यते येन स्वकीयोपासनाप्रणालीषु केनापि प्रकारेण सनातनधर्मसम्बन्ध्यङ्गप्रत्यङ्गानां साहाय्यं न गृह्यते । योगसाधनमार्गस्य प्रधानाचार्येण महर्षिपतञ्जलिनैवमभिहितं विद्यते—"योगश्चित्तवृत्तिनिरोधः" "तदा द्रष्टुः स्वरूपेऽवस्थानम्" ।

योगभेदविषये योगतत्त्वोपनिषदि एवं लिखितं विद्यते । यथा—योगो हि बहुधा ब्रह्मन् भिद्यते व्यवहारतः । मन्त्रयोगो लयश्चैव हठोऽसौ राजयोगकः ॥ तथा योगियाज्ञवल्क्येऽपि-मन्त्रयोगो हठश्चैव राजयोगो लयस्तथा । योगश्चतुर्विधः प्रोक्तः योगिभिस्तत्त्वदर्शिभिः ॥ भक्तिविषये भक्ताग्रगण्येन देवर्षिणा नारदेनाप्युक्तम्—"सा कस्मिन् परमप्रेमरूपा" "अमृतस्वरूपा च" शाण्डिल्यसूत्रेऽभिहितम्—"सापरानुरक्तिरीश्वरे" "तत्संस्थस्यामृतत्त्वोपदेशात्" महर्षिणाऽऽङ्गिरसाप्युक्तम्—"साऽनुरागरूपा" "स्नेहप्रेमश्रद्धातिरेकादलौकिकेश्वरानुरागरूपा" । दैवीमीमांसायां "स्वरूपद्योतकत्वात् पूर्णानन्ददापरा" "सा निखिलसाधनयज्ञाधिकरणम्" "ऋषिदेवपितॄणां भक्तिरभ्युदयप्रदा" इति भक्तिस्वरूपवर्णनं वर्तते । स्मृतौ "यथा समस्तलोकानां जीवनं सलिलं स्मृतम् । तथा समस्तसिद्धीनां जीवनं भक्तिरिष्यते इति ॥

मन्त्रयोगलक्षणविषये तथा तदङ्गविषयेऽपि मन्त्रयोगसंहितायामेवं लिखितं विद्यते—नामरूपात्मिका सृष्टिर्यस्मात्तदवलम्बनात् । बन्धनान्मुच्यमानोऽयं मुक्तिमाप्नोति साधकः ॥ तामेव भूमिमालम्ब्य स्खलनं यत्र जायते । उत्तिष्ठति जनः सर्वोऽध्यक्षेणैतत्समीक्ष्यते ॥ नामरूपात्मकैर्भावैर्बध्यन्ते निखिला जनाः । अविद्याग्रसिताश्चैव तादृक्प्रकृतिवैभवात् ॥ आत्मनः सूक्ष्मप्रकृतिं प्रवृत्तिं चाऽनुसृत्य वै । नामरूपात्मनोः शब्दभावयोरवलम्बनात् ॥ यो योगः साध्यते सोऽयं मन्त्रयोगः प्रकीर्तितः ॥ भवन्ति मन्त्रयोगस्य षोडशाङ्गानि निश्चितम् । यथा सुधांशोर्जायन्ते कलाः षोडश

शोभनाः ॥ भक्तिः शुद्धिश्चासनं च पञ्चाङ्गस्यापि सेवनम् । आचारधारणे दिव्यदेश-सेवनमित्यपि ॥ प्राणक्रिया तथा मुद्रा तर्पणं हवनं बलिः । यागो जपस्तथा ध्यानं समाधिश्चेति षोडश ॥

हठयोगलक्षणतदङ्गसम्बन्धे हठयोगसंहितायामेवं लिखितं विद्यते—प्राणाऽपान-नादबिन्दुजीवात्मपरमात्मनाम् । मेलनाद्घटते यस्मात्तस्माद्वै घट उच्यते ॥ आम-कुम्भमिवाऽम्भःस्थं जीर्यमाणं सदा घटम् । योगानलेन सन्दह्य घटशुद्धिं समाचरेत् ॥ हठयोगेन प्रथमं जीर्यमाणामिमां तनुम् । द्रढयन् सूक्ष्मदेहं वै कुर्याद् योगयुजं पुनः ॥ स्थूलः सूक्ष्मस्य देहो वै परिणामान्तरं यतः । कादिवर्णान् समभ्यस्य शास्त्रज्ञानं यथाक्रमम् ॥ यथोपलभ्यते तद्वत् स्थूलदेहस्य साधनैः । योगेन मनसो योगो हठयोगः प्रकीर्तितः ॥ षट्कर्मासनमुद्राः प्रत्याहारश्च प्राणसंयामः । ध्यानसमाधी सप्तैवाङ्गानि स्युर्हठस्य योगस्य ॥

लययोगलक्षणतदङ्गसम्बन्धे लययोगसंहितायामेवं लिखितं विद्यते-ब्रह्माण्डपिण्डे सदृशे ब्रह्मप्रकृतिसम्भवात् । समष्टिव्यष्टिसम्बन्धादेकसम्बन्धगुम्फिते ॥ ऋषिदेवौ च पितरौ नित्यं प्रकृतिपूरुषौ । तिष्ठन्ति पिण्डे ब्रह्माण्डे ग्रहनक्षत्रराशयः ॥ पिण्डज्ञानेन ब्रह्माण्डज्ञानं भवति निश्चितम् । गुरूपदेशतः पिण्डज्ञानमाप्य यथायथम् ॥ ततो निपु-णया युक्त्या पुरुषे प्रकृतेर्लयः । लययोगाभिधेयः स्यात् प्रोक्तमेतन्महर्षिभिः ॥ आधारपद्मे प्रकृतिः सुप्ता कुण्डलिनी स्थिता । सहस्रारे स्थितो नित्यं पुरुषश्चोपगीयते ॥ प्रसुप्तायां कुण्डलिन्यां बाह्यसृष्टिः प्रजायते । योगाङ्गैस्तांप्रबोध्यैव यदा तस्मिन्विलोप-येत् ॥ कृतकृत्यो भवत्येव तदा योगपरो नरः । पुराविदो वदन्तीमं लययोगं सुखावहम् ॥ अङ्गानि लययोगस्य नवैवेति पुराविदः । यमश्च नियमश्चैव स्थूलसूक्ष्मक्रिये तथा ॥ प्रत्याहारो धारणा च ध्यानञ्चापि लयक्रिया । समाधिश्च नवाङ्गानि लययोगस्य निश्चि-तम् ॥ स्थूलदेहप्रधाना वै क्रिया स्थूलाभिधीयते । वायुप्रधानासूक्ष्मास्याद्ध्यानं बिन्दु-मयं भवेत् ॥ ध्यानमेतद्धि परमं लययोगसहायकम् । लययोगानुकूला हि सूक्ष्मा या लभ्यते क्रिया ॥ जीवन्मुक्तोपदेशेन प्रोक्ता सा हि लयक्रिया । लयक्रियासाधनेन सुप्ता सा कुलकुण्डली ॥ प्रबुद्ध्य तस्मिन्पुरुषे लीयते नात्र संशयः । शिवत्वमाप्नोति तदा साहाय्यादस्य साधकः ॥ लयक्रियायाः संसिद्धौ लयबोधः प्रजायते । समाधियेन निरतः कृतकृत्यो हि साधकः ॥

राजयोगलक्षणतदङ्गसम्बन्धे राजयोगसंहितायामेवं वर्तते—सृष्टिस्थितिविना-शानां हेतुता मनसि स्थिता । तत्साहाय्यात्साध्यते यो राजयोग इति स्मृतः ॥ अन्तःकरणभेदास्तु मनो बुद्धिरहङ्कृतिः । चित्तञ्चेति विनिर्दिष्टाश्चत्वारो योगपारगैः ॥ तदन्तःकरणं दृश्यमात्मा द्रष्टा निगद्यते । विश्वमेतत्तयोः कार्यकारणत्वं सनातनम् ॥ दृश्यद्रष्ट्रोश्च सम्बन्धात्सृष्टिर्भवति शाश्वती । चाञ्चल्यं चित्तवृत्तीनां हेतुमत्र विदुर्बुधाः ॥ वृत्तीर्जित्वा राजयोगःस्वस्वरूपं प्रकाशयेत् । विचारबुद्धेः प्राधान्यं राजयोगस्य साधने ॥

ब्रह्मध्यानं हि तद्ध्यानं समाधिर्निर्विकल्पकः । तेनोपलब्धिसिद्धिर्हि जीवन्मुक्तः प्रकथ्यते ॥ उपलब्धमहाभावा महाबोधान्विताश्च वा । महालयं प्रपन्नाश्च तत्त्वज्ञानावलम्बतः ॥ योगिनो राजयोगस्य भूमिमासादयन्ति ते । योगसाधनमूर्द्धन्यो राजयोगोऽभिधीयते ॥ कलाषोडशकोपेता राजयोगस्य षोडश । सप्त चाङ्गानि विद्यन्ते सप्तज्ञानानुसारतः ॥ विचारमुख्यं तज्ज्ञेयं साधनं बहु तस्य च । धारणाङ्गं द्विधा ज्ञेयं ब्रह्मप्रकृतिभेदतः ॥ ध्यानस्य त्रीणि चाङ्गानि विदुः पूर्वे महर्षयः । ब्रह्मध्यानं विराट्ध्यानं चेशध्यानं यथाक्रमम् ॥ ब्रह्मध्याने समाप्यन्ते ध्यानान्यन्यानि निश्चितम् । चत्वार्य्यङ्गानि जायन्ते समाधेरिति योगिनः ॥ सविचारं द्विधाभूतं निर्विचारं तथा पुनः । इत्थं संसाधनं राजयोगस्याङ्गानि षोडश ॥ कृतकृत्यो भवत्याशु राजयोगपरो नरः । मन्त्रे हठे लये चैव सिद्धिमासाद्य यत्नतः । पूर्णाधिकारमाप्नोति राजयोगपरो नरः ।

योगविज्ञानविषये शक्तिगीतायामधस्तनं वर्णनमुपलभ्यते-योगःस्वरूपतो नूनमष्टाङ्गेषु विभज्यते । यमश्च नियमश्चैव तथैवासनमेव च ॥ प्राणायामस्तथा देवाः ! प्रत्याहारश्च धारणा । ध्यानं समाधिरित्यष्टौ योगस्याङ्गानि सन्ति ह ॥ एकतत्त्वैकमूलस्तन्त्रन्यः संयममूलकः । अयमष्टाङ्गयोगो हि षोडशाङ्गैः प्रपूर्य्यते ॥ मन्त्रो हठो लयो राजयोग एते चतुर्विधाः । क्रियासिद्धांशभेदा वै सन्ति योगस्य निर्ज्जराः ॥ निरोधश्चित्तवृत्तीनां नामरूपावलम्बनात् । साध्यते साधकैर्यत्र मन्त्रयोगः स उच्यते ॥ नैकासाश्चैव मूर्त्तीनामध्यात्मभावसंयुजाम् । आश्रयाद्ध्यायमाना हि मन्त्रयोगविधानतः ॥ मन्त्रयोगपरा धीराः साधका मामुपासते । साहाय्यात्स्थूलदेहस्य चित्तवृत्तिनिरोधनम् ॥ यत्र संसाध्यते धीरैर्हठयोगः स ईर्य्यते । ज्योतिर्मयस्य रूपस्य कल्पितस्यावलम्बनात् ॥ ध्यायमानाश्च मां सिद्धीर्लभन्ते हठयोगिनः । शक्तीर्जड़त्वमापन्नाः प्रसुप्तास्ता विबोध्य हि ॥ समष्टिव्यष्टिशक्तीनां साहाय्याद् यत्र साध्यते । चित्तवृत्तिनिरोधोऽसौ लययोगो निगद्यते ॥ साक्षादाध्यात्मिकं बिन्दु-मयं मे रूपमद्भुतम् । दृष्ट्वा कृतार्थतां यान्ति तत्क्षणं लययोगिनः ॥ नित्यानित्यस्वरूपाणां पदार्थानां विवेकतः । त्रिगुणानां त्रिभावानामपि नित्यं विमर्शतः ॥ शक्तिमाध्यात्मिकीं यत्र हितां प्राप्नुवतां स्वतः । निरोधश्चित्तवृत्तीनां जायते योगिनां सताम् ॥ कथितो राजयोगोऽसौ सर्वयोगशिरोमणिः । पराभक्त्यधिकारं मे भक्ताश्च ज्ञानिनो गताः ॥ साहाय्याद्राजयोगस्य लभन्ते राजयोगिनः । समाध्यात्मस्वरूपं हि साक्षात्कृत्यान्ततश्च माम् ॥ एताश्चतुर्विधा एव प्रोक्ताः साधनरीतयः । ममोपास्तेः सदा देवा मूलभित्तय ईरिताः ॥ चतुर्णाञ्चैव योगानामेतेषां निखिलाः क्रियाः । विद्यन्ते विबुधश्रेष्ठाः ! योगाङ्गाष्टकमूलकाः ॥ संयमश्चैकतत्त्वञ्च द्वयोः सम्बन्धसंजुषाम् । विभेदेन प्रयोगाणामेतद्योगचतुष्टयम् ॥ विभक्तुं क्षमते देवाः ! कलाषोडशकं मम । नैवात्र विस्मयः कार्यो युष्माभिर्देवसत्तमाः ! ॥ विकाशो ज्ञानिभक्तेषु कलाषोडशकस्य मे । स्वभावसिद्ध एवास्ते ज्ञानिभक्ताः परन्त्वमी ॥

अनन्यभक्तियोगेन ध्यायन्ते मां सदा ध्रुवम्। अतः सदाऽवतिष्ठन्ते वासनारहिता इमे ॥ मच्चित्ता मद्गतप्राणा मद्ध्याना मत्परायणाः। मय्यर्पितात्मसर्वस्वा मद्गतात्मधियोऽमलाः ॥ अपि मय्यनुरक्ताश्च जायन्ते सर्वदैव ते। ज्ञानिनां मम भक्तानां नास्ति भेदो मया सह ॥ त एवाहमहो देवाः ! अहमेव च ते मताः। नात्र कश्चन सन्देहः सत्यं सत्यं वदाम्यहम् ॥ जीवभूमेः समारोढुं ब्रह्मभूमिं सुखं सुराः !। अष्टसोपानतुल्यानि योगाङ्गान्यष्ट सन्त्यलम् ॥ समाधिरन्तिमं येषामारोहणमुदाहृतम्। सोपानमादिमं देवाः ! येषां हि विद्यते यमः ॥ स्थूलदेहस्य सम्बन्धाच्छुद्धिराध्यात्मिकी तु या। साध्यते साधकैर्देवाः ! आहुस्तं योगिनो यमम् ॥ ब्रह्मचर्यं बहिः शौचो ह्यहिंसा सत्यमुत्तमम्। सर्वभूतदयाऽस्तेयं मिताहारोऽपरिग्रहः ॥ शारीरिकं तपो देवा दानं तु सात्त्विकन्तथा। प्रधानान्येवमादीनि साधनानि यमस्य हि ॥ नियमो योगसोपानं द्वितीयं सम्प्रकीर्तितम्। सूक्ष्मदेहाश्रयाद्यैस्तु साधनैः साधकैर्ध्रुवम् ॥ लभ्यतेऽध्यात्मसंशुद्धिस्तमाहुर्नियमं सुराः !। अन्तःशौचश्च सन्तोषः स्वाध्यायो मानसं तपः ॥ आस्तिक्यमार्जवं ह्रीश्च क्षमा चापि धृतिस्तथा। देवर्षिपितृभक्तिश्च नियमस्यापि निर्ज्जराः ! ॥ प्रधानान्येवमादीनि विद्यन्ते साधनान्यहो। तृतीयारोहणं विज्ञा आसनम्परिचक्षते ॥ यत्र संस्थापयेद्देवं शरीरं सुखपूर्वकम्। यतः स्यान्मनसः स्थैर्य्यं वायोश्चापि सुरर्षभाः ! ॥ आसनं तद्विजानीत साधनेषु सुखावहम्। आसनस्य बहून्भेदान् योगाचार्य्याः प्रचक्षते ॥ निखिलास्तेऽवगन्तव्याः पूज्याङ्घ्रेः श्रीगुरोर्मुखात्। किञ्चिदत्रापि वक्ष्येऽहं श्रूयतां देवपुङ्गवाः ! ॥ सिद्धं पद्मासनं देवाः स्वस्तिकासनमेव च। आसनानि प्रधानानि त्रीण्येतानि निबोधत ॥ प्राणायामश्चतुर्थं वै योगारोहणमुत्तमम्। विधारणेन प्राणानां तथा प्रच्छर्दनेन च ॥ यद्वशीकरणं नूनं प्राणायामः स उच्यते। अनेकभेदसत्त्वेऽपि भेदा अष्ट प्रधानतः ॥ सहितः सूर्य्यभेदी च तथोज्जायी च शीतली। भ्रामरी भस्त्रिका मूर्च्छा केवली च सुरर्षभाः ! ॥ प्राणायामस्य तत्त्वज्ञैर्योगाचार्य्यैः कृता इति। एतदुक्तं तु योगस्य यमाद्यङ्गचतुष्टयम् ॥ बाह्यराज्यसुसम्बन्धि वर्त्तते विबुधर्षभाः !। अन्ताराज्यसुसम्बन्धियोगाङ्गान्यधुना ब्रुवे ॥ प्रत्याहारं हि जानीत पञ्चमारोहणं सुराः !। यथा कूर्मो निजाङ्गानि स्वस्यैव पृष्ठकोटरे ॥ प्रत्याहरति रक्षार्थं तथैव योगिनो वराः। अभ्यस्यन्ति समाकर्ष्टुं प्रवृत्तिं विषयानुगाम् ॥ स्वीयां यद्विषयान्नूनं प्रत्याहारः स उच्यते। एवं वदन्ति विद्वांसो योगपङ्कजभास्करम् ॥ इन्द्रियाणां विचरतां विषयेषु निरर्गलम्। बलादाहरणं तेभ्यः प्रत्याहारोऽभिधीयते ॥ बाह्यालम्बनसाहाय्यात् तथान्तरवलम्बनात्। प्रत्याहारो द्विधा प्रोक्तो बाह्याऽभ्यन्तरभेदतः ॥ धारणा पृष्ठसोपानं योगस्य समुदाहृतम्। यदा धृत्या तु भो देवाः ! योगिनो योगयुक्तया ॥ चित्तमान्तरिके राज्ये स्वीयं संयमपूर्वकम्। प्रतिष्ठापयितुं सम्यगभ्यस्यन्ति निरन्तरम् ॥ धारणा सैव विज्ञेया योगाधारस्वरूपिणी। धारणा-

## राजनीति शब्दावली—

Administration ऐडमिनिस्ट्रेशन — शासन, शासन-प्रबन्ध, राज्यप्रबन्ध।
Advisory Council ऐडवाइजरी कौंसिल — परामर्शपरिषद्, सलाहकारी मण्डल।
Autocracy आटोक्रेसी — निरंकुश तन्त्र, स्वेच्छाचारी तन्त्र।
Bolshevic Party बोल्शेविक पार्टी — बोल्शेविक दल (रूसकी तरह बहुमत शासन तथा साम्यवादमें विश्वास रखने वाला दल।
Bureau Cracy ब्युरो क्रेसी — नौकरशाही, कर्मचारी तंत्र।
Cabinet कैबिनेट — मत्रीमंडल, केबिनट।
Cabinet Government कैबिनेट गवरन्मेण्ट — मंत्रीमण्डलमूलक सरकार, अमात्य-सरकार।
Civil disobidience सिविल डिसोबिडियन्स — सविनय अवज्ञा।
Communalism कम्युनलिज्म — सम्प्रदायवाद, स्थानीय स्वायत्तशासनवाद।
Communism कम्युनिज्म — समष्टिवाद (समस्त सम्पत्ति समाजको सौंपकर। प्रत्येक व्यक्तिका, यथाशक्ति काम करते हुए आवश्यकतानुसार वस्तुएं लेना)
Comrade कामरेड — सखा, कामरेड। प्रायः समाज-वादियोंके लिये प्रयोग होता है)
Confederation कानफिडरेशन — (सम्मिलित राज्योंका) मित्र संघ।
Democracy डिमाक्रेसी — लोकतंत्र, प्रजातंत्र, प्रजासत्तात्मक शासन। (जनताका, जनता या उसके प्रतिनिधियों द्वारा जनताके लिये, शासन)
Diplomacy डिप्लोमेसी — कूटनीति।
Dominion Status डोमिनियन स्टेटस — औपनिवेशिकपद, साम्राज्यान्तर्गत स्वराज्य।
Ergatocracy इरगैटोक्रेसी — श्रमियोंका राज्य, श्रमजीवी राज्य।
Fascist Party फैसिस्ट पार्टी — फेसिस्ट पार्टी (इटलीका राष्ट्रीयदल जो समाजवाद और बोलशेविज्मका विरोधी है)
Republic रिपब्लिक — गणतन्त्र, प्रतिनिधिमूलक राज्य।
Socialism सोशालिज्म — समाजवाद, साम्यवाद (यह सिद्धान्त कि उत्पादन आदि आर्थिक व्यवस्था व्यक्तिमूलक या प्रतिस्पर्धात्मक न होकर सहकारितामूलक हो)

---

### भारत-सरकारद्वारा

## परिभाषिकशब्द निर्माण समितिस्थापना।

( ले० श्री वासुदेव द्विवेदी साहित्याचार्यः )

सम्प्रति निखिलभारतीय प्रादेशिकभाषाणां कृते समानपारिभाषिकशब्दानां निर्माणस्य भारतसरकारद्वाराऽपि समर्थनं क्रियते तत्र च ध्यानं दीयते। तस्य केन्द्रिय शिक्षा परामर्शदात्री परिषदात्मनः गतवर्षीये मईमाससम्पन्ने शिमलाऽधिवेशने ( ६-७ मई १९४० ) एतत्सम्बन्धे विचारमकरोत् समानपारिभाषिकशब्द-निर्माणस्य प्रस्तावमपि स्वीचकार। यद्यपि परिषद् नवीनशब्दनिर्माणापेक्षया पूर्वतः प्रचलमानानामाङ्गलशब्दानामेव प्रयोगं साधु मनुते तद्द्वारैव च गणित-विज्ञानाऽर्थशास्त्र-रसायन शास्त्रप्रभृतीणां विषयाणामध्ययनाध्यापनादिकं हितकरं स्वीकुरुते तथापि विषयेऽस्मिन् विशेषानुसन्धानाय परिषदा निम्नलिखितविदुषां समवायेन एका समितिर्निर्मिता समितये च स्वेच्छया नवीनसदस्य निर्वाचनायाधिकारो दत्तः। समितौ पूर्वं निम्नलिखिता अष्टौ सदस्या अभूवन्। ते च—

१—महामाननीयः सर अकबर हैदरी, एल, एल० डी०, निजामसरकारस्य शासनपरिषदः प्रधानसभापतिः।

२—माननीयः दीवानबहादुर सर के रामुन्नी मेनन।

३—श्री एस० सी० त्रिपाठी आई० ई० एस० उत्कलीयशिक्षासंचालकः।

४—श्री डब्ल्यू० एच० एफ० आर्मस्टांग, आई० ई० एस०, पञ्चनदीयशिक्षा संचालकः।

५—डाक्टर सर जिआउद्दीन अहमद।

६—पण्डित अमरनाथ झा, प्रयागविश्वविद्यालयकुलपतिः।

७—डाक्टर यू० ए० दाउदपोटा, एम० ए०, पी-एच डी०, सिन्धशिक्षा-संचालकः।

८—भारत सरकारस्य शिक्षा कमिश्नर महोदयः।

एवमेतदष्टसदस्यसंघटितायाः समितेरस्या अधिवेशनं हैदराबादनगरे १५-१६ अक्टूबर १९४० ई० तिथौ सम्पन्नं यत्र चत्वारोऽन्येऽपि सदस्या निर्वाचिता येषां नामानि निम्नाङ्कितानि सन्ति—

१—डाक्टर अब्दुल हक, अखिलभारतीयाया दिल्लीनगरस्थिताया अंजुन तरक्कीए-उर्दू समितेर्मन्त्री।

२—डाक्टर एस० एस० भटनागर ओ० पी० ए०, वैज्ञानिकस्य औद्योगिकस्य चानुसन्धानस्य संचालकः।

३—डाक्टर मोजफ्फर उद्दीन कुरैशी, उस्मानिया विश्वविद्यालये रसायनशास्त्रा-चार्यः रसायनविभागाध्यक्षश्च।

४—नवाब मेंहदी यार जंग बहादुर, उस्मनियाविश्वविद्यालयस्यकुलपतिः, निजामसरकारशिक्षासदस्यः।

एवं प्रकारेणास्यां समितौ द्वादश सदस्या वतन्ते। अथानया समित्या किं कार्यं विहितम्, संस्कृतभाषाया हिन्दीभाषायाश्च कृते एतादृशी समितिर्हितकरी हानिकरी वा, यवनसदस्य बहुलेयं समितिः पारिभाषिकशब्देषु सकलभारतीय प्रादेशिकभाषाणां मूलभूतायाः संस्कृतभाषाया उपयोगं करिष्यति न वा? एतत्सम्बन्धे संस्कृतसाहित्य-सम्मेलनस्य संस्कृतविदुषां च किं कर्तव्यम्? इत्यादिविषये सूर्योदयस्याग्रिमेऽङ्के विस्तृतविवेचनं करिष्यामः। इदानीमेतावन्मात्रसूचनामेव दत्वा विरमामः।

---

## भारतधर्ममहामण्डलाय धन्यवादः।

### निबन्धा—श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः।

(स० ध० कालेजोपाध्यायः, मुल्तान सिटी)

ऐषमो भारतधर्म्ममहामण्डलेन मह्यं—'विद्यावागीशः' इत्युपाधिर्वितीर्णः *। मम विचारे मन्ये तेन भ्रान्तिः स्वीकृता; यतोऽहं साधारणोऽस्मि जनः; विद्यायामपाटव-वांश्च। इतश्चाऽहमुपाधीनां प्रेमो अपि नास्मि। तथापि महामण्डलेन यद् मह्यमुपा-धिप्रदानं कृतम्; तत्र इदं कारणमनुमीयते यद्—मया क्रियमाणा संस्कृतसेवा तस्या-भिरुचिता जाता। ततश्च मम एतद्विषयकोत्साहवृद्ध्यर्थमेव तेन उक्तोपाधिप्रदानं कृतं भवेत्। एतदुत्साहवृद्ध्युपलक्ष्ये, साधारणजनदृष्टौ मम सम्माननायै च प्रदत्तस्व-प्रेमपरिचयोपलक्ष्येऽहं तस्मै धन्यवादाऽर्प्पणं स्वकर्त्तव्यं मन्ये। एतत्सम्माननायां वर्द्धापनं पत्रद्वारा वाचिकद्वारा च प्रहिण्वतां स्वप्रेमिजनानामपि धन्यवादं करोमि; तान् विश्वासयामि च यद्—मम संस्कृतसेवा यथाशक्ति यथामति च यथा इदानीं प्रवर्त्तमानाऽस्ति; तथाऽग्रेऽपि प्रवर्त्तमाना स्थास्यति। एतत्पूर्त्यर्थं मह्यं हृदाऽऽशीर्देया। शम्।

---

* उपाधिः क्यन्तद्युत्वात् पुंसि।

# मृतक श्राद्धसिद्धिः

निबन्धा—पं० श्रीदीनानाथ शर्मा शास्त्री सारस्वतः विद्यावागीशः।
स० ध० कालेज मुलतानस्थः

( क्रमागता )

वेदेऽपि अग्नेर्ब्राह्मणेषु प्रवेशो दर्शितः। तथा च—'अग्निष्टद् विश्वाद् आपृणातु विद्वान् सोमस्य, यो ब्राह्मणान् आविवेश' अथर्व० १९।५९।२। अतएव यथा वेदे दिव्य-( दिवि भवेभ्यो ) देवेभ्यो दुग्धघृतादिदानं निर्दिष्टम्; तथा 'भूदेवेभ्यो ब्राह्मणेभ्योऽपि निर्दिष्टम्। तथा च—'ये देवा दिविषदो, अन्तरिक्षसदश्च, ये च इमे भूम्यामधि। तेभ्यस्त्वं धुक्ष्व सर्वदा क्षीरं सर्पिरथो मधु' अथर्व० १०।९।१२ भूदेवा ब्राह्मणाः प्रसिद्धा एव।

'स्वधा याश्चकृषे जीवन्, तास्ते सन्तु मधुश्च्युतः' अथर्व० १८।२।२० अत्र जीवनावस्थायां लिटो दर्शनाद् अधुना पितॄणां मृतकता सिद्धा। अथवा—जीवन् इत्यनेन पुत्रः सङ्केत्यते, 'यथैवात्मा तथा पुत्रः' मनु० ९।१३० इति पुत्रस्य स्वावतारत्वात्। 'संगच्छस्व पितृभिः संयमेन स्योनास्त्वा वाता उपवान्तु शग्माः' अथर्व० १८।२।२१ अत्र मृतककृते प्रार्थना। यदि मृतकेन सह सम्बन्धोऽस्माकं त्रुटितोऽभविष्यत्; तर्हि इमाः प्रार्थना वैयर्थ्यमाकलयिष्यन्। 'मा त्वा वृक्षः सम्बाधिष्ट' अथर्व० १८।२।२५ अनेन प्रतीयते यद्-यमलोकगमनसमये ईदृक्षा वृक्षा अपि सन्ति, येषां पत्राणि वज्रवद् दुःखदानि, तेभ्यः कष्टाऽभावप्रार्थना।

'ये निखाताः' इति निर्दिष्टचरे मन्त्रे 'निखाता' इत्यपि लिखितम्। निखननमपि निर्दिष्टं वेदे धर्म्मशास्त्रे च। तथा च 'पृथिवीं ( पृथिवीरूपं ) त्वा पृथिव्याम् आवेशयामसि' अथर्व० १८।४।४८ 'अभि त्वा ( मृतकम् ) ऊर्णोमि पृथिव्या मातुर्वस्त्रेण' अथर्व० १८।२।५२ 'अभि एनं ( मृतं ) भूमे! ऊर्णुहि' अ० १८।२।३।५०, १८-४।६६ ऊर्णुञ् आच्छादने। 'उपसर्प मातरं भूमिमेताम्' अ० १८।३।४९ इति मृतकः प्रोच्यते। मनुस्मृतिरपि द्रष्टव्या—'ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः। अलङ्कृत्य शुचौ भूमौ अस्थिसञ्चयनाद् ऋते' ५।६८, भूमौ निखननं संस्काराऽयोग्यत्वाद् अत्यन्तोच्चाधिकारित्वाद् वा इति ध्येयम्। अतएव कासुचिद् अन्त्यजजातिषु मुसल्मानेषु च अद्विजत्वात् संस्काराऽयोग्यतया नाऽन्त्येष्टिः; एवम् अत्यन्तोच्चाधिकारित्वात् परमहंसेष्वपि नाऽन्त्येष्टिः, किन्तु भूमौ निखननमात्रमेव।

पारस्करगृह्यसूत्रे उक्तम्—'शरीरमदग्ध्वा निखनन्ति' ३।१०।५ बोधायनीयपितृमेधशेषसूत्रे उक्तम्—'अत्र त्रिवर्षात् पूर्वं मृतानां व्याहृतिभिर्दहेद् अथवा निखनेत्' १।४ 'दन्तजातानां प्रणवेन निखनेत्' १।४ एवं सोऽत्र निखातोऽस्मत्कुलजः पितृलोकं गमिष्यति, स पितृपदवाच्यो भविष्यति। परमहंससंन्यासिनाम्× अपि मरणे निखननं प्रसिद्धम्।

आर्यसमाजिक दृढ़दुर्ग 'गुरुकुलकाङ्गड़ी' स्नातकः श्रीमङ्गलदेवतडित्कान्तः स्वप्रणीते 'यम और पितर' पुस्तके 'ये निखाताः' इतिमन्त्रसम्बन्धे आचष्टे—'इस मन्त्र में यह बताया गया है कि—चार प्रकार का अन्त्येष्टि संस्कार होता है, गाड़ना-बहाना-जलाना-हवामें खुला छोड़ना। यहाँ पर इन चारों संस्कारोंसे संस्कृत पितरोंको हविखानेके लिये अग्निको बुला लानेके लिये कहा है' पृ० २८। 'जो मनुष्य संन्यासी होकर अपना देह त्याग करते हैं' उनके देहको न जलानेके लिये स्मृतियोंमें कहा गया है। क्योंकि—संन्यासाश्रममें प्रवेश करते हुए पुरुषको सर्वमेध-याग करना पड़ता है। इस यागमें वह अग्नि सम्बन्धी सर्वकार्यों से मुक्त हो जाता है। अत एव उसे मरनेपर अग्निद्वारा नहीं जलाया जाता' यम और पितर पृ० ४२, पृ० १७०।

बोधायनगृह्यशेषसूत्रे उक्तम्—'अप्राकृतानां महतां ब्रह्मनिष्ठमनस्विनाम्। तेषां तु खननं कार्यमिति प्राहुर्मनीषिणः' ४।१७।१४ तस्माद् भूमिं भृशं खात्वा सम्यक् प्रच्छादयेद्यतीन्। सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च। न तस्य दहनं कुर्याद् नाऽशौचं नोदकक्रिया' ४।१७।१६-१७। बोधायनीयपितृमेधसूत्रेऽप्युक्तम्—'परिव्राजकस्य संस्कारविधौ पृथिव्याम्' 'अक्षीभ्यामोषधीभ्यां' इति शरीरं निधाय 'भूमिर्भूमिमगान्माता मातरमप्यगात् (तै० मं० २।१५) इति उदरे पा' निधाय' ३।११।१ 'सृगालवायसाः खादन्ति त्वेतद्दोषमाहारयेत् कर्तुः, तस्मात् अविशंकां वेदिं प्रच्छादयेदिति बोधायनः' अथर्व० १८।२।३४ इतिमन्त्रस्य मृतपितृविषयत्वं व्याख्यातप्रायमेव। 'दग्धा' इति तु स्पष्टमेव। जीविता अपि किं दग्धा भवन्ति ?। यदि न; तर्हि मृतकश्राद्धं सिद्धमेव।

'प्रेहि प्रेहि पथिभिः पूर्याणैर्येना ते पूर्वे पितरः परेताः। उभा राजानौ स्वधया मदन्तौ यमं पश्यासि वरुणं च देवम्' अथर्व० १८।१।५४ पितरः परेता—मृत्वा उपगता इत्यर्थः। इति मृतकश्राद्धसिद्धिः। 'ये अग्निष्वात्ता (दग्धा) ये अनग्निष्वात्ता

× संन्यासिनाम्। अत्र सम्-उपसर्गः न्यासिन् शब्दे च दीर्घप्राप्तिर्न।

मध्ये दिवः स्वधया मादयन्ते। तेभ्यः स्वराड् असुनीतिमेतां यथावशं तन्वं कल्पयाति' यजु' १९।६० ऋ० १०।१५।१४ इति मृतपितॄणां पुनः शरीरग्रहणम्, तेषामेव दिवो मध्ये स्वधया मत्तता प्रदर्शिता। किं जीवितपितरो दिवो मध्ये लम्बन्ते ?। 'यान् अग्निरेव दहन् स्वदयति ते पितरोऽग्निष्वात्ताः' २।६।१।७ इति शतपथब्राह्मणकथनाद् अग्निष्वात्तपितॄणां स्पष्टं मृतकता सिद्धा। 'साङ्गाः स्वर्गे पितरो! मादयध्वम्' अथर्व० १८।४।६४ अत्रापि स्वर्गे पितॄणां साऽङ्गता सिद्धा।

'जीवो मृतस्य चरति स्वधाभिः' अथर्व० ९।१०।८ मृतस्य जीवः स्वधाभिश्चरति इत्यन्वयः। अत्रापि स्पष्टता जाता मृतकश्राद्धस्य। स्वधापितृदाने भवति। अत एवोक्तम्—'नमो वः पितरः, स्वधा वः पितरः' अथर्व० १८।४।८५। तेन 'एतत् ते प्रततामह! स्वधा ये च त्वामनु' अ० १८।४।७५ 'एतत् ते ततामह स्वधा' अ० १८।४।७६ 'एतत् ते तत! स्वधा' अ० १८।४।७७ अत्र मृतानामेव पितृपितामह प्रपितामहानां स्वधा ज्ञेया। 'तत' इति 'पितृ' नाम तथा च—'एतां वाव प्रजापतिः प्रथमो वाचं व्याहरद् एकाक्षरद्व्यक्षरां ततेति ताततेति' ऐतरेयारण्यके १।३।३। 'नामान्यविद्वान् तत! पितामह! प्रपितामहेति' आश्वलायनगृह्यसूत्रे २।६।

'ये च जीवा ये च मृताः'''तेभ्यो घृतस्य कुल्या एतु' अथर्व० १८।४।५ अत्र मृतानां घृतकुल्या प्राप्त्या स्पष्टं मृतकश्राद्धसिद्धिर्जाता। अत्र 'जीवा' इत्यस्य 'जीवात्मस्वरूपा' इत्यर्थः 'जीवो मृतस्य' अ० ९।१०।८ ऋ० १।१६४।३० इति मन्त्रस्य 'जीव' पदवद्, न तु जीविता इति। 'यद् वाव जीवेभ्यो हितं तत् पितृभ्यः' शतपथ० १३।८।१।९ इति जीवपित्रोर्भेदः। 'तुष्यतु दुर्जनः' इति न्यायेन मन्येताऽपि अमुत्र 'जीव' शब्दस्य जीविताऽर्थः; तर्हि जीवितानां तु सेवां सनातनधर्मोऽपि आदिशत्येव इति न तन्मतहानिः। परं मृतस्य घृतकुल्या प्राप्त्या तु वादिनां मतस्यैव उज्जासो भवति। आर्यसमाजिकस्नातकमङ्गलदेवतडित्कान्तेन स्वपुस्तकेऽत्र उक्तम्—'अतः इसके सिवाय दोनों अर्वाचीन वा प्राचीन पितर निःसन्देह मृतपितर ही हैं, इस मन्त्रसे यह स्पष्ट हुआ कि मृतपितरोंको भी नमस्कार करना चाहिये, यम और पितर पृ० ११४।

यद्यपि 'जीवा' इत्यस्य 'जीविता' इत्यर्थो मन्येताऽपि; तथापि इह लोके समक्षं स्थितानां जीवितानां तु सोऽर्थो नाऽभिप्रेतः; 'तेभ्यो घृतस्य कुल्या एतु' इति कथनस्य अस्वारस्यापत्तेः। नहि समक्षं परोक्षं वा स्थितानामैहलौकिकपितॄणां कृते 'तेभ्यो घृतस्य कुल्या प्राप्नोतु' इति कथनं कथमपि सार्थक्यमश्नुते; कथनस्य वा नावश्यकता भवति तदा। किन्तु इदं कथनं परलोकप्राप्तानामेव जीववतां कृते घटते। यद्येवं

तर्हि तेऽपि इतो मृता एव ज्ञेयाः। एवं तन्मन्त्रे 'जाताः' इति पदमपि इह मानुषे लोके मृतानां परलोके च जातानां ग्रहणं सङ्केतयति। एभ्यो घृतकुल्याप्रदानाऽऽदेष्टा वेदः स्पष्टं मृतकश्राद्धपक्षपाती सिध्यति।

'प्रेतेभ्यो ( मृतेभ्यो ) ददाति' कात्यायनश्रौतसूत्रे २३। 'अप उपस्पृश्य श्राद्धमस्मै ( प्रेताय ) दद्युः' आश्वलायनगृह्यसूत्रे ४।५।८ अत्र मृतकाय श्राद्धविधानं निर्दिष्टम्; यद् गृह्यसूत्रमवलम्ब्य स्वा० दयानन्दोऽन्त्येष्टिसंस्कारशालीं स्वसिद्धान्ततया मेने; तदनुसारं तेन श्राद्धमपि मृतकस्य मन्तव्यं स्यात्। 'ब्राह्मणान् भोजयित्वा' आश्वलायनगृह्यसूत्रे ४।७।१ अत्र मृतकश्राद्धे ब्राह्मणभोजनं निर्दिष्टम्। 'अथातः पार्वणे श्राद्धे काम्ये आभ्युदयिके एकोद्दिष्टे वा, ब्राह्मणान् श्रुतशीलवृत्तसम्पन्नान्...... उदङ्मुखान् पितृवद् उपवेश्य' आश्वलायनगृह्यसूत्रे ४।७।१-२ अत्रापि मृतकश्राद्धे ब्राह्मणभोजनं सिद्धं जातम्।

अन्ये मन्त्राः श्रूयन्ताम्—'ये नः पितुः पितरो ये पितामहाः, ये आविविशुः—उरु अन्तरिक्षम्। ये अक्षिपन्ति पृथिवीमुत द्यां तेभ्यः पितृभ्यो नमसा विधेम' अथर्व० १८।२।४९ अत्र तेभ्यः पितृभ्योऽन्नदानम्; ये अन्तरिक्षं प्रविष्टा मृता इत्यर्थः। ततो ये पृथिव्यां जन्म गृहीतवन्तः, अद्यापि स्वर्गस्था वा। 'पितृभ्यः' इत्यस्य 'पितृशरीरेभ्यः' इति आर्यसमाजिकतुलसीरामस्वामिनोऽर्थस्तु हास्यजनकः; यतः स 'पान्तीति पितरः' इति पितृशब्दं निर्वक्ति। न च मृतपितृशरीराणि पान्ति। तानि च शरीराणि अत्रैव नश्यन्ति, नाऽन्तरिक्षमाविशन्ति। तेन तुलसीरामस्वामिनो मृतकश्राद्धतः स्वरक्षायै एव एतच्छलम्।

'ये नः पितुः पितरो ये पितामहाः'......तेभिर्यमः संरराणो हवींषि उशन् उशद्भिः प्रतिकाममत्तु' अ० १८।३।४६ अत्र मृतपितॄणां यमेन सह हविर्भक्षणं स्पष्टं सिध्यति। 'यमो वैवस्वतो राजा-इत्याह, तस्य पितरोविशः' शतपथ० १३।४।३।६ इत्येवम् उक्तमन्त्रस्य चारितार्थ्यं सिद्धम्। 'स्वधा पितृभ्यो अन्तरिक्षसद्भ्यः' अथर्व० १८।४।७९ 'स्वधा पितृभ्यो दिविषद्भ्यः' अ० १८।४।८० अन्तरिक्षसदां दिविषदां च पितॄणामेतल्लोकविद्यमानपितृभ्यो भिन्नत्वाद् जीवितश्राद्धमपास्तम्। पृथिवीसदोपि पितर इह लोकान्मृत्वा ततः पितृलोकं प्राप्तास्ततश्च पृथिवीं प्राप्ता विवक्षिताः, न तु अस्माकं जीवितपितरः। स्वधा-अन्नम्। एतेन स्वमानरक्षायै पितृशब्दस्य ऋतुसूर्यचन्द्राऽर्थं कुर्वाणा वादिनः परास्ताः; तेषामन्नेन तृप्त्यभावाद्, वादिनां मतेन मूर्तिपूजाप्रसङ्गाच्च।

श्राद्धप्रकरणे पितृशब्देन इतो मृताः पितृलोकं प्राप्ता एव गृह्यन्ते, भोजनप्रकरणे सैन्धवशब्दस्य लवणार्थवदिति ज्ञेयम् । स्वधाशब्दस्य सायण इत्थमर्थं ब्रवीति—'स्वज्ञातिभिर्धीयते—इति स्वधा । पिण्डोदकदानादिरूपा पितृतृप्तिकरी क्रिया स्वधा—इति । सा त्वयि मृतपुरुषे भवतु—इति सायणव्याख्यानेन मृतकश्राद्धविषये स्पष्टता जाता । तथा चाऽत्र मन्त्रः—'जीवेषु भद्रं तन्मयि, स्वधा पितृषु सा त्वयि' अथर्व० १८।२।५२, अत्र जीवानां शुभवस्तु प्रार्थकेन स्वस्मिन्नेव प्रार्थितम्, पितृषु स्थिता स्वधा च तेन मृतके प्रार्थिता—इति पितॄणां स्पष्टं मृतकत्वं तच्छ्राद्धं च सिद्धम् । 'स्वधाकारो हि पितॄणाम्' तैत्ति० ब्रा० १।६।९।५ 'त्वमग्ने ! ईडितो जातवेदो ! अवाड् हव्यानि सुरभीणि कृत्वा प्रादाः पितृभ्यः, स्वधया ते अक्षन्' अ० १८।३।४२, ऋ० १०।१५।१२ यजुः १९।६६। अत्र अग्निकर्तृकं पितृभ्यो हव्यप्रदानम्; तेन ते अस्माल्लोकान्मृता एव सिद्धाः । नहि जीवितेभ्योऽग्निर्हव्यं यच्छति । अग्निसमानत्वाच्च ब्राह्मणस्याऽप्यधिकारः सिद्धो मृतपितृश्राद्धे ।

'ये अग्निष्वात्ताः' यजुः १९।६० इति मन्त्रः पूर्वं लिखितः; 'ये अग्निदग्धाः' अ० १८।२।३५ इति मन्त्रश्च अग्रे* लेखिष्यमाणः । उभाभ्यां मृतपितृश्राद्धसिद्धिर्भवति । परं केचिद् वादिनः 'अग्निष्वात्ताः' इत्यस्य 'अग्नि विद्यामें निपुण' इति स्वकपोलकल्पितमर्थं कुर्वन्ति । तदीयो वास्तविकोऽर्थोऽस्माभिः शतपथप्रमाणेन प्रदर्शितपूर्वः । अत्र वादिभिः स्वसाम्प्रदायिकदृढदुर्गे 'गुरुकुलकाङ्गडी'तोऽधीतविद्यस्य स्नातकमङ्गलदेवतडित्कान्तस्य सम्मतिरपि द्रष्टव्या । तथा च—'ये अग्निष्वात्ताः' 'ये अग्निदग्धाः' अर्थ उपरोक्त मन्त्रानुसार ही है । इन दोनों मन्त्रोंकी तुलना करके देखनेसे पाठकोंको स्वयमेव 'अग्निष्वात्त' का अर्थ ज्ञात हो जायगा । यजुर्वेदस्थ इस मन्त्रमें जहाँ 'अग्निष्वात्ताः' पद है, वहाँपर ऋग्वेदमें 'अग्निदग्धाः' पद है, शेष मन्त्र सर्वथा समान है । इसका अभिप्राय यह है कि—जो अर्थ 'अग्निष्वात्त' का है; वही अर्थ 'अग्निदग्ध' का है । 'अग्निदग्ध' का अर्थ सुस्पष्ट है जो अग्नि द्वारा जलाया गया हो, अतः 'अग्निष्वात्त' का भी वही अर्थ हुआ । शतपथब्राह्मणने भी २।६।१।७ वही अर्थ किया है; इस प्रकार वेद वा ब्राह्मण 'अग्निष्वात्त' के इसी अर्थपर सहमत हैं कि—जो अग्नि द्वारा जलाया गया हो... इस प्रकार अग्निष्वात्त मृतपितर ही हैं, यह साबित होता है । और उनसे ऋ० १०।१५।११, यजुः १९।५८, यजुः १९।६१ यज्ञमें बुलाकर रक्षा करनेके लिये कुछ न कुछ अवश्य करना चाहिये' यम और पितर पृ० ३७ ।

* लेखिष्यमाणः । अत्र लघूपधगुणः । नायं धातुः कुटादिर्येन गुणाऽभावः स्यात् ।

'ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया मादयन्ते । त्वं तान् वेत्थ यदि ते जातवेदः! स्वधया यज्ञं स्वधितिं जुषन्ताम्' अथर्व० १८।२।३५ मन्त्रेऽत्र मृतपितृभ्य एव स्वधा (अन्न) दानं निर्दिष्टम्, यतो व्युत्थितपितरोऽस्माल्लोकान्मृता एव जायन्ते, न तु इह जीविता मध्ये दिवस्तिष्ठन्ति। दग्धा इत्यस्य ज्वलिता इत्यर्थः। दग्धा इत्यस्य विदग्धाश्चतुरा इति वादिनामर्थकरणं तु आहोपुरुषिकामात्रमेव । नहि संस्कृतसाहित्ये 'दग्धाः' 'विदग्धाः' इत्यनयोरर्थे कदापि साम्यम्; अन्यथा 'हार-संहारविहाराणां भवपराभवविभवादीनामपि समानार्थो भवेत्। परं नैवमस्ति। तेन दग्धा इत्यस्य ज्वलिता इत्यर्थत्वात् श्राद्धस्य मृतपितृविषयता सिद्धा। वादिना मुक्तदुश्चेष्टा मृतकश्राद्धगलग्रहाद् आत्मानं त्रातुमेवेति स्पष्टमेव। आर्यसमाजिकस्नातक-मङ्गलदेवतडित्कान्तेन अत्रोक्तम्—'इस मन्त्रमें भी ३४ मन्त्रोक्त ( मृत ) पितरोंके लिये यज्ञसेवन करनेका उल्लेख है' यम और पितर पृ० १७१।

अथ च उक्तमन्त्रे इतो मृतानां पितॄणां स्वधया मत्तता प्रदर्शिता। तेनाऽत्र पितृ-पदेन 'किरणा'न *ग्रहीतुं शक्याः। न ते स्वधया मत्ता भवन्ति। न च ते अग्नि-दग्धा अनग्निदग्धा वा। न चाऽन्नं तेभ्यः कश्चित् समर्पयति। कदाचिन्मूर्त्ति-पूजायै वादिनः किरणेभ्योऽन्नं समर्पयन्तो भवन्तु। न च वेद आदिशति किरणेभ्यः कचित् स्वधासमर्पणम्। अथ च 'स ( अग्निः ) वेदनिहितान् निधीन् ( इव ) पितॄन् परावतो गतान्' अ० १८।४।४१ इति तेषां पितॄणामग्निकर्तृकं वेदनमभिहितम्। इदं च तन्महत्त्वम्। किरणज्ञाने तु न तन्महत्त्वम्। जीवितान् पितॄन् वयमपि विद्मः; अतस्तत्राऽप्यग्नेर्न महत्ता। मृतपितृकत्वे तु सर्व्वमुपपद्यते।

एतेन 'अग्निदग्धा' इत्यनेन व्याख्यातेन मन्त्रेण 'ये अग्निष्वात्ता ये अनग्नि-ष्वात्ता मध्ये दिवः स्वधया मादयन्ते' १९।६० इति याजुषमन्त्रोऽपि व्याख्यातः। 'अग्निष्वात्ताः' 'अग्निदग्धाः' एतयोर्मिथस्तुल्योऽर्थः। 'यान् अग्निरेव दहन् स्वदयति, ते अग्निष्वात्ता' शतपथे २।६।१।७। 'तीर्थे स्नात्वा प्रेताय उदकक्रियां कृत्वा नाम-गोत्रे मनसा ब्रूते' बोधायनगृह्यशेषसूत्रे ३।२१।८-१३ 'उभयान् पश्यति ब्राह्मणाँश्च भुञ्जानान् माने (वेदिकायां) च पितॄन्—इत्युपदिशन्ति' आपस्तम्बधर्मसूत्रे २।१८।१७ इति मृतकश्राद्धसिद्धिः। ( क्रमशः )

---

* न ग्रहीतुं शक्याः। अत्र ग्रहधातोस्तुमुनि कित्ङित्त्वाऽभावान्न सम्प्रसारणप्राप्तिः।

[ कश्मीरस्थ विद्वत्परिषदो राजगुरु महामहोपाध्याय पं० देवराजशास्त्रि-
विद्यारत्न स्मृतिभास्कर इत्यादि विरुदावली विभूषितस्य
धर्मवीरस्याकस्मिकासामयिकवियोगे ]

## शोकावेदनम् ।

अहो बतास्तं गत एष सूर्यः
श्रीदेवराजो विबुधां वरेण्यः ।
कश्मीरभूमीन्द्रगुरुः स गङ्गा-
धरात्मजो गोकुलचन्द्रपौत्रः ॥ १ ॥

दानैकवीरस्तु महीसुराणां
गुरुर्गरीयान् ननु योगमूर्तिः ।
दयार्द्रचित्तः किल कल्पवृक्षो-
ऽकस्माद्वियुक्तोऽसमये बतास्मत् ॥ २ ॥

सर्वप्रजामङ्गलमाचिकीर्षु-
धर्मं धरायां सततं वितन्वन् ।
रोरुद्यमानान्निखिलाञ्जनान् यो
त्यक्त्वा गतोऽयं न पुनर्निवृत्त्यै ॥ ३ ॥

विद्यारत्न इति प्रथामुपगतो योऽयं स्मृतेर्भास्करः
यद्विद्यानृपनोतिशास्त्रनिचय · प्रावीण्यसंपच्छ्रियम् ।
दृष्ट्वा जार्जनृपो 'महा' दिक्-'महोपाध्याय' शब्दैरलं
संचस्कार तु यं जहाति स जगत् श्रीदेवराजः कथम् ॥ ४ ॥

नानाशास्त्रकलाकलापनिरतो विद्यावदातो जनै-
र्वन्द्यः पुण्यनिधिस्त्वनल्पसुखदः कारुण्यरत्नाकरः ।
सत्कीर्त्या धवलीचकार धरणीमानन्दयन्नोजसा
हा ! कष्टं स दिवङ्गतस्त्वसमये श्रीदेवराजः कथम् ॥ ५ ॥

निस्सीमं नयपाटवं निरुपमा धीशक्तिरुग्राहता
निष्कामाचरणं निरालसमहो निर्व्याजधर्मस्थितिः ।
निस्त्रैगुण्यरतिर्गुणा इति च यं संभूषयांचक्रिरे
हा ! कष्टं स दिवं गतस्त्वसमये श्रीदेवराजः कथम् ॥ ६ ॥

यद्यप्यत्र कृतादराः कृतधियः यत्राधिपाः पण्डिताः
नास्माभिः प्रतिबोधनीयमधिकं ब्रूमस्तु किञ्चित्परम् ।

सन्तापं जनयत्यहर्निशमहो श्रीमद्वियोगोऽधुना
दौर्भाग्येन महीयसा ऽप्यमर ! हे ते विप्रलब्धा वयम् ॥ ७ ॥

काश्मीरविद्वत्परिषन्मन्त्री विद्यावारिधिः
पं० शिवनाथशास्त्री साहित्याचार्यः, पुरातत्त्वविशारदः।

## यतीन्द्रपञ्चकम्

ले० पं० केदारनाथ त्रिपाठी न्यायशास्त्री काशीस्थः।

विरामोऽसत्यानां सुभगविधिकामो निशिदिनम्
पराधारो ब्रह्मश्रवणमननाध्यानविधिषु[1]।
अहोरात्रं लोकोद्धृतिकृतिकृते श्रावणपटुः
न कुत्रेतो जाने स इत इति जाने विलपनम् ॥ १ ॥

सदा तुष्टो विद्वज्जनगण इहामुष्य सुकृतैः
पुरः केषामेषां शममुपगता नाद्यवितति:।
स्वयं ब्रह्मानन्दह्रद - ह्रतवितापोऽपि जनता-
कृतेऽकस्मात् कस्मान् निधनकृततापं वितनुते ॥ २ ॥

किमालापैरेभिः सततरतसंसारमनसाम्
क्व वा हानिस्तस्य प्रधनपरमानन्दमवतः।
परं नूनं लोके त्रितयविधिजातं परिगतं
निराधारत्वं, कं तमनु सुजनं स्वाश्रयतु तत् ॥ ३ ॥

नूनं यतीन्द्र ! भवता भवतान्यदेशे
काशीं विहाय सुदिनञ्च महेश्वरीयाम्।
मुक्तेन सूचिततरं नहि काशिकाया—
मावश्यकी मृतिरपि त्ववबोध एव ॥ ४ ॥

हा ! मण्डलीश ! यतिवर्य्य ! न पूरणीयम्
पूर्य्येत रिक्तमिदमद्य पदं कुतो नु।
प्राप्तोऽपि मुक्तपदवीं कमपीत्थमेव
योग्यं नियोजयतु योगिवरं यतीन्द्रम् ॥ ५ ॥

---

[ १—श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति विधित्रयम् ]

सरस्वती श्रुतिमहती महीयताम्

## अखिल भारतवर्षीय

# धार्मिक संस्कृतविश्वविद्यालय

के

# उद्देश्य, नियमावली तथा पाठ्यक्रम।

१—इस विश्वविद्यालयके निम्नलिखित उद्देश्य हैं।

क—पूज्यपाद त्रिकालदर्शी, ज्ञानके मार्ग बतलानेवाले महर्षियोंकी चलाई हुई शिक्षा-प्रणालीका प्रचार स्थायी रखना।

ख—भारतवर्षमें स्थान स्थान पर विद्वान् ब्राह्मणों और दाताओंके प्रयत्नसे जो संस्कृत विद्या-प्रचारके लिये शिक्षाके केन्द्र हैं, उनको एक सूत्रमें बाँधकर इसके शुभ उद्देश्योंकी पूर्तिमें सहायक बनाना।

ग—भारतवर्षके जो प्राचीन विद्यापीठ हैं, उनको पुनर्जीवित और शक्तिशाली बनानेका प्रयत्न करना एवं उनको काशीके इस प्रधान केन्द्र द्वारा उत्साह और सहायता पहुँचाना।

घ—एक विशेष परीक्षाप्रणालीका अवलम्बन करना, जो अपनी प्राचीन मर्यादा, धार्मिक और आध्यात्मिक उन्नतिका साधक हो और वर्तमान देशकालके उपयोगी भी हो। इस शिक्षाप्रणालीके परीक्षा-केन्द्र समस्त भारतवर्षमें स्थापित करना।

ङ—सनातनधर्मी नर-नारी और बालक-बालिकाओंमें धार्मिक शिक्षाका विस्तार करना तथा प्रत्येक हिन्दूके घरमें पुस्तकादि द्वारा धार्मिक शिक्षाका नियमित प्रचार करना।

च—वर्णाश्रम सदाचारका लोप न होने पावे और आध्यात्मिक उन्नतिशील सम्प्रदायका नाश न हो, इसके लिये भारतवर्षमें सदाचारी विद्वान् ब्राह्मणोंके विद्यादानके कार्यमें सहायक बनना।

छ—काशीके इस विद्यापीठके प्रयत्नसे पृथ्वीकी सब जातियोंको लाभ पहुँच सके, ऐसा प्रयत्न करना।

ज—काशीमें उपदेशक महाविद्यालयका स्थापन करना जिसमें धार्मिक प्रणालीके अनुसार विद्यार्थियोंको शास्त्राध्ययन करनेकी, व्याख्यान देनेकी और अन्य आवश्यकीय विषयोंकी ऐसी

शिक्षाका प्रदान करना कि, वे सुयोग्य धर्मवक्ता, धर्मशिक्षक, धर्मसेवक और देश-सेवक बनें ।

ञ—आयुर्वेदकी सर्वाङ्गीण शिक्षाके लिये काशीमें आयुर्वेदकी जो परीक्षक-मण्डली है उसका कार्य बढ़ाकर उसे इसमें शामिल करके आयुर्वेद शिक्षाकी उन्नति करना ।

ज—शास्त्र प्रकाश और प्रचारके लिये जो स्वतन्त्र विभाग होगा, उसके द्वारा विश्व-विद्यालयके मुखपत्ररूपसे सामयिक पत्र प्रकाशन करना और दुर्लभ प्राचीन एवं अत्युपयोगी प्राचीन पुस्तकोंका प्रकाशन करना ।

ट—साङ्गोपाङ्ग वेद, वैदिकदर्शनशास्त्र, धर्मशास्त्र, पुराणशास्त्र, ज्योतिषशास्त्र, धर्म-वक्तृताकी प्रणाली, एवं संस्कृत साहित्यका ज्ञान, भारतखण्डकी मातृभाषा हिन्दी साहित्यका ज्ञान, कर्मकाण्डका विधिज्ञान आदिकी विभिन्न २ परीक्षायें स्थापित करके सनातनधर्मके अविरुद्ध सद्विद्याका विस्तार करना और परीक्षोत्तीर्ण चुने हुए विद्यार्थियोंको आर्थिक पारितो-षिक देकर उत्साहित करना ।

ठ—आर्य-महिलाओंमें धार्मिक शिक्षा-विस्तार करनेका यथासम्भव प्रयत्न करना तथा अंग्रेजी भाषा-भाषी विद्वानोंमें धार्मिक-शिक्षा और तुलनात्मक दार्शनिक गवेषणाके प्रचार करनेके लिये प्रबन्ध ( रचना ) लिखवाकर योग्य उपाधि आदि देकर, सम्मान करनेका प्रयत्न करना ।

## इतिहास ।

२—उपर्युक्त उद्देश्योंकी पूर्तिके लिये इस धार्मिक विश्वविद्यालयका सूत्रपात वर्तमान शताब्दीके आरम्भमें हुआ था । प्रथम श्रीभारतधर्म महामण्डलके 'विद्यापरिषद्' नामक विभाग द्वारा संस्कृतविद्या और धार्मिक संस्कृतिका-प्रचार एवं अनुसंधानात्मक कार्य होता रहा । अनन्तर जब श्री मथुरापुरीसे महामण्डलका प्रधान कार्यालय श्रीकाशीपुरीमें आया तब यह विभाग "वाराणसी विद्यापरिषद्" नामसे कार्य करने लगा । शनैः शनैः इसकी उन्नति होती गयी और धर्म प्रचारक और धर्मोपदेशक प्रस्तुत करनेके लिये 'उपदेशक-महाविद्यालय' महामण्डलभवनमें स्थापित हुआ और आयुर्वेद शिक्षाकी सर्वाङ्गीण उन्नतिके लिये 'काशी आयुर्वेद सम्मिलनी, नामक आयुर्वेद परीक्षक समिति भी इसमें सम्मिलित कर ली गई । सन् १९२४ ईस्वीसे इसने परीक्षा विश्वविद्यालयका रूप धारण किया ।

## परीक्षा विवरण ।

३—इस समय निम्नलिखित रीतिसे परीक्षा लेनेका प्रबन्ध है ।

अ—निर्दिष्ट विषयों पर निबन्धरचना द्वारा ।

आ—निबन्धरचना एवं व्याख्यान द्वारा ।

इ—केन्द्रोंमें प्रश्न पत्रोंके लिखित उत्तर द्वारा तथा प्रधानकार्यालयमें मौखिक व्याख्यान द्वारा।

ई—केन्द्रोंमें प्रश्न पत्रोंके लिखित उत्तर द्वारा।

## "अ" विभागकी परीक्षाएँ।

(क) वेद, दर्शन, धर्मशास्त्र, पुराण, आगम, साहित्य, व्याकरण, ज्योतिष और आयुर्वेदकी महोपाध्याय परीक्षा [ संस्कृतमें निबन्ध लिखना होगा ]।

(ख) D. O. C. (डी० ओ० सी) और Ph. D. (पी यच० डी०) संस्कृत, मातृभाषा अथवा अंग्रेजीमें निबन्ध लिखा जा सकता है।

(ग) राष्ट्रभाषाभास्कर केवल हिन्दी भाषामें निबन्ध द्वारा।

## "आ" विभागकी परीक्षाएँ।

पुरोहितरत्न, देवार्चनरत्न, व्याख्यानवाचस्पतिकी उपाधि परीक्षाके लिये संस्कृत अथवा हिन्दी भाषामें निबन्ध लिखा, स्वस्वमातृभाषामें व्याख्यान दिया जा सकता है।

## "इ" विभागकी परीक्षाएँ।

श्रौतकर्मनिष्णात, पौरोहित्यनिष्णात और व्याख्यानकौमुदी (केवल महिलाओंके लिये) संस्कृत और हिन्दीमें।

## "ई" विभागकी परीक्षाएँ।

(क) वेद, दर्शन पुराण, आगम, धर्मशास्त्र, व्याकरण, साहित्य, कर्मकाण्ड, ज्योतिष, आयुर्वेद और हिन्दीकी प्रवेशिका, विशारद, शास्त्री तथा आचार्य परीक्षाएँ।

(ख) हिन्दीके आचार्य और शास्त्री परीक्षाओंमें यथाक्रम हिन्दी-साहित्यरत्न और हिन्दी साहित्यभूषण उपाधि दी जायगी।

(ग) आयुर्वेद शास्त्री परीक्षामें जो हिन्दीभाषामें उत्तर लिखते हैं उत्तीर्ण होने पर उन्हें आयुर्वेदशास्त्रीके समकक्ष (वैद्यभूषणकी) उपाधि दी जाती है।

(घ) प्रवेशिका (प्रथमा) और विशारद (मध्यमा) के प्रथम और द्वितीय प्रश्नपत्रोंके उत्तर संस्कृत, अथवा हिन्दी भाषामें लिखे जा सकते हैं।

(ङ) महिलाएँ भी इन परीक्षाओंमें सम्मिलित हो सकती हैं। उनके लिये विशेष परीक्षाएँ भी होती हैं। यथा १—राष्ट्रभाषाचन्द्रिका केवल हिन्दीभाषामें। यह हिन्दी भूषणके समकक्ष है। धर्मप्रभा—केवल हिन्दीभाषामें [ मध्यमा (विशारद) के समकक्ष ]; ३—धर्मप्रवेशिका—केवल हिन्दी भाषामें [ प्रथमा (प्रवेशिका)के समकक्ष ]

(च) हिन्दी मिडिलकी योग्यता वाले अथवा संस्कृतकी प्रथमा की योग्यताके छात्रोंके लिये "हिन्दी प्रवेशिका" और "धर्मप्रवेशिका" परिक्षायें होंगी।

(छ) अँग्रेजी स्कूलोंके मिडिलकी योग्यता वाले छात्रोंके लिये जूनियर (प्रथमाके समकक्ष) और हाई स्कूलकी योग्यतावालोंके लिये सीनियर (मध्यमाके समकक्ष) परीक्षायें हिन्दी और अँग्रेजीमें होंगी।

## परीक्षा-केन्द्र।

४—क-परीक्षाएँ विश्वविद्यालयके स्थापित केन्द्रोंमें ही होती हैं। केन्द्रों की सूची परिशिष्ट में छपी है। नये केन्द्र खोलनेमें निम्नाङ्कित स्थानोंको प्रधानता दी जायगी।

(१) कालेज।

(२) स्कूल।

(३) संस्कृत पाठशाला।

(४) सार्वजनिक पुस्तकालय।

(५) महामण्डलसे संबन्धयुक्त धर्मसभा।

(६) अन्य धर्मसभा।

(७) महामण्डलके संरक्षकोंके स्थान।

(८) महामण्डलके प्रतिनिधियोंके स्थान।

(९) अन्य महानुभावोंके स्थान जो अपनी योग्यताके कारण प्रसिद्ध एवं प्रतिष्ठित हों।

(१०) यदि अन्य सज्जन केन्द्र खोलना चाहें तो अपनी योग्यताके सम्बन्धमें वहाँके तीन प्रतिष्ठित महानुभावों (संस्कृतके प्रसिद्ध विद्वान् एवं कमसे कम नगरमान्य व्यक्ति) की संमति भेजना आवश्यक होगा।

ख—परीक्षा-केन्द्र-स्थापनके लिए कुछ भी शुल्क नहीं लिया जाता है।

ग—केन्द्र स्थापित होनेके लिए प्रधान कार्यालयसे छपा हुआ केन्द्रावेदनपत्र जो निःशुल्क मिलता है मँगवाकर उसे भरकर भेजना चाहिये।

घ—विश्वविद्यालयकी शिष्ट-समितिकी अनुमति हो जाने पर प्रधानकार्यालयसे केन्द्र-प्रमाणपत्र भेजा जाता है।

ङ—जिस केन्द्रसे कमसे कम १० विद्यार्थी प्रति वर्ष परीक्षामें सम्मिलित होंगे उस केन्द्रको विश्वविद्यालयका मुखपत्र 'सूर्योदय' विना शुल्क भेजा जायगा। अन्य केन्द्रोंको सूर्योदयका केवल वही अंक भेजा जायगा जिसमें परीक्षाफल प्रकाशित होगा। यदि ऐसे केन्द्र 'सूर्योदय' लेना चाहेंगे तो उनसे वार्षिक शुल्क केवल १) रु० लिया जायगा।

## परीक्षाओंमें सम्मिलित होनेके लिये आवश्यक योग्यता।

५—क-वेद, धर्मशास्त्र पौरोहित्य, देवार्चन और श्रौत कर्मकी परीक्षाओंमें केवल ब्राह्मण पुरुष ही सम्मिलित हो सकेंगे।

ख—सामान्यतया तो किसी विषयकी विशारद (मध्यमा), शास्त्री, आचार्य और महोपाध्याय परीक्षामें वे ही सम्मिलित हो सकते हैं जो उस विषयमें इस विश्वविद्यालयकी अथवा अन्य विश्वविद्यालयकी अथवा किसी तत्सम परीक्षासमितिकी क्रमशः प्रथमा, मध्यमा, शास्त्री एवं आचार्य (अथवा तत्सम किसी उपाधि) परीक्षामें उत्तीर्ण हों।

(ग) व्याकरण मध्यमोत्तीर्ण साहित्य शास्त्रीकी परीक्षा दे सकता है।

(घ) व्याकरण शास्त्री और साहित्य शास्त्री परीक्षामें उत्तीर्ण पुराण और धर्म शास्त्रकी आचार्य परीक्षा दे सकता है।

(ङ) यदि विशेष योग्यता प्रमाणित हो तो कोई छात्र प्रथमा उत्तीर्ण हुए बिना ही, किसी विषयकी मध्यमा परीक्षा दे सकता है।

## परीक्षा शुल्क।

६—परीक्षा शुल्क इस प्रकार निश्चित किया गया है—

| नाम परीक्षा | शुल्क |
|---|---|
| प्रथमा (प्रवेशिका), जूनियर, धर्मप्रवेशिका और धर्मप्रभा | १) |
| मध्यमा, सीनियर, हिन्दीविशारद, राष्ट्रभाषाचन्द्रिका | २) |
| शास्त्री, हिन्दीसाहित्यभूषण, वैद्यभूषण, श्रौतकर्म-निष्णात, पौरोहित्यनिष्णात, व्याख्यानकौमुदी। | ४) |
| आचार्य, हिन्दी साहित्यरत्न, पुरोहितरत्न, देवार्चनरत्न, राष्ट्रभाषाभास्कर | ५) |
| B. D. C. (बी. डी. सी.) धर्माचार्य, महोपाध्याय और व्याख्यानवाचस्पति, | १०) |
| डी. ओ. सी. (D.O.C.) और पीएच. डी. (Ph. D.) | २५) |

क-महिलाओंकी विशेष परीक्षाओं एवं आयुर्वेदकी परीक्षाओंके अतिरिक्त अन्य परीक्षाओंमें सम्मिलित होनेके लिये महिलाओंसे निर्दिष्ट शुल्कका केवल आधा ही लिया जाता है।

ख—जो परीक्षाएँ केवल निबन्ध द्वारा अथवा निबन्ध और व्याख्यान द्वारा होती हैं उन परीक्षाओंमें सम्मिलित होनेके लिए उपर्युक्त शुल्कके अतिरिक्त २) रजिस्ट्रेशन शुल्क भी देना होता है।

ग—परीक्षामें अनुपस्थित अथवा अनुत्तीर्ण छात्रोंका शुल्क लौटाया नहीं जाता है। अस्वस्थताके कारण अनुपस्थित छात्र यदि परीक्षारंभ तिथि तक प्रधान कार्यालयमें सप्रमाण प्रार्थनापत्र भेज देंगे तो वरशिष्टसमितिकी अनुमतिसे उन्हें अगले वर्ष उसी परीक्षामें निःशुल्क प्रवेश प्राप्त हो सकेगा।

घ—निबन्धरचना द्वारा परीक्षाओंके लिये रजिस्ट्रेशन शुल्क सहित आवेदन पत्र स्वतंत्र रूपसे कार्यालयमें १ मार्च तक भेजे जा सकते हैं। परीक्षा शुल्क निबन्धके साथ भी भेजा जा सकता है। परन्तु उस वर्ष निबन्धके लिये निश्चित तिथि तक निबन्ध कार्यालयमें न पहुँचेगा तो अग्रिम वर्षके लिये पुनः रजिस्ट्रेशन शुल्क सहित आवेदन पत्र भेजना होगा।

## परीक्षा तिथि।

७—प्रतिवर्ष प्रायः अप्रैलमें ही परीक्षा हुआ करेगी। निश्चित तिथियोंकी सूचना ४ मास पहिले केन्द्रोंको भेज दी जायगी और 'सूर्योदय'में भी प्रकाशित कर दी जायगी। यदि किसी विशेष कारणवश निश्चित परीक्षातिथियोंमें परिवर्तन किया जायगा तो इसकी सूचना यथासमय केन्द्रोंमें भेज दी जायगी।

## परीक्षावेदनपत्र।

८—(क) प्रत्येक केन्द्रसे जनवरी मासके अन्त तक परीक्षार्थियोंके सशुल्क आवेदनपत्र प्रधान कार्यालयमें पहुँच जाना चाहिए। मुद्रित आवेदनपत्र कार्यालयमें दिसम्बर तक प्रार्थनापत्र आ जानेपर विना मूल्य दिये जायेंगे। केन्द्राध्यक्षोंको आवश्यकतानुसार आवेदनपत्र प्रधानकार्यालयसे मँगवा लेना चाहिये।

(ख) परीक्षावेदनपत्र छात्रोंको बड़ी सावधानीसे स्वयं भरना चाहिये। अध्यापकों और केन्द्राध्यक्षोंको नियम नं० ५ में उल्लिखित छात्रोंकी योग्यताके विषयमें स्वयं परीक्षादि करके आवेदनपत्रों पर प्रमाणरूपेण हस्ताक्षर करना चाहिये।

(ग) यदि विशेष कारणवश किसी परीक्षार्थीका आवेदनपत्र और शुल्क जनवरीके अन्त तक न भेजा जा सका हो तो ड्योढ़े शुल्क सहित वह १ मार्च तक प्रधान कार्यालयमें पहुँच जाने पर स्वीकृत हो सकेगा।

(घ) यदि परीक्षाके लिये पूर्ण योग्यता होते हुए भी कोई छात्र शुल्क देनेकी असमर्थतासे परीक्षामें सम्मिलित न होता हो तो केन्द्राध्यक्षको महामण्डलके किसी श्रेणीके तीन सदस्योंसे उसकी सच्चरित्रता और असमर्थताका लिखित प्रमाणपत्र लेकर १५ जनवरी तक छात्रके प्रार्थनापत्रके साथ प्रधान कार्यालयमें भेज देना चाहिये। ऐसी प्रार्थनाओं पर शिष्टसमितिसे विचार होकर केन्द्राध्यक्षको जो सूचना भेजी जाय उसके अनुसार उस छात्रके सम्बन्धमें कार्यवाही की जानी चाहिये।

प्रत्येक परीक्षामें प्रत्येक केन्द्रसे १० प्रतिशत छात्रोंका ही शुल्क अदेय हो सकता है।

## परीक्षा-स्थान और समय।

९—(क) स्थापित केन्द्रोंमें ही परीक्षायें निश्चित तिथियोंमें प्रातः ७ बजेसे पूर्वाह्न ११ बजे तक होंगी।

(ख) प्रधान कार्यालयकी लिखित अनुमति विना केन्द्रस्थानका परिवर्तन नहीं किया जा सकता।

(ग) आवश्यकतानुसार महिलाओंके लिये परीक्षा भवनमें विशेष प्रबन्ध होगा। केन्द्राध्यक्षोंका कर्तव्य है कि इसके निमित्त पहिलेसे ही प्रधान कार्यालयसे पत्रव्यवहार करके अनुमति मँगा लेंवे।

(घ) परीक्षाभवनमें जिस परीक्षार्थीके लिये जो स्थान नियत कर दिया गया हो उसी स्थानमें बैठकर उसे प्रश्नपत्रोंके उत्तर लिखने होंगे।

## उत्तीर्ण होनेके लिये अंक प्राप्ति।

### प्रथमा, मध्यमा।

१०—(क) प्रत्येक प्रश्नपत्रके पूर्णाङ्क १०० होंगे।

प्रथमा, मध्यमा और तत्सम अन्य परीक्षाओंमें केवल तीन प्रश्नपत्र होंगे। प्रत्येक पत्रमें कमसे कम ३३ अंक पानेवाले ही छात्र उत्तीर्ण होंगे।

तीनों पत्रोंमें मिलाकर कमसे कम १०० अंक पानेवाले तृतीय श्रेणीमें
" " " १३५ " " द्वितीय "
" " " १८० " " प्रथम "
उत्तीर्ण होंगे।

### शास्त्री।

(ख) शास्त्री एवं तत्सम अन्य परीक्षाओंमें चार प्रश्नपत्र होंगे। प्रत्येक पत्रमें उत्तीर्ण होनेके लिये कमसे कम ३३ अंक प्राप्त करना चाहिये। चारो पत्रोंमें मिलाकर कमसे कम १६० अंक प्राप्त करनेवाले द्वितीय श्रेणीमें और कमसे कम २४० अंक प्राप्त करनेवाले प्रथम श्रेणी में रक्खे जायँगे। इसमें तृतीय श्रेणी नहीं होगी।

### आचार्य।

(ग) आचार्य एवं तत्सम अन्य परीक्षाओंमें भी चार चार पत्र होंगे। प्रत्येक पत्रमें उत्तीर्ण होनेके लिये कमसे कम ३५ अंक प्राप्त करना चाहिये। चारों पत्रोंमें मिलाकर कमसे कम १८० अंक प्राप्त करनेवाले द्वितीय श्रेणीमें और २४० पानेवाले प्रथम श्रेणीमें रक्खे जायँगे।

## फल प्रकाशन।

परीक्षाफल सूर्योदयमें प्रकाशित करके प्रत्येक केन्द्रमें भेजा जाता है। यदि कोई छात्र अपना फल पृथक् जानना चाहे तो उसे उत्तरके लिये डाकव्यय सहित पता लिखा हुआ लिफाफा भेजना चाहिये।

## केन्द्राध्यक्ष और निरीक्षकोंका कर्तव्य।

(१)—एक केन्द्रसे बैठनेवाले समस्त परीक्षार्थियोंके आवेदनपत्र सशुल्क एक साथ प्रधान कार्यालयमें भेजे जाने चाहिये।

(२)—शुल्क भी उन सबका मनिआर्डर द्वारा एक साथ भेजना चाहिये यदि शुल्क न आया तो आवेदनपत्र स्वीकृत न किये जायेंगे।

(३)—केन्द्राध्यक्षको आवेदनपत्रोंके साथ अपने हस्ताक्षर युक्त एक सूची भी भेजनी चाहिए जिसमें इस प्रकार लिखना चाहिये।

सन्———————की परीक्षाके लिये———————केन्द्रकी

### परीक्षावेदनपत्र सूची।

| परीक्षार्थी नाम | परीक्षा नाम | प्रवेश शुल्क | परीक्षा शुल्क | शुल्कके मनीआर्डर भेजनेकी तिथि | प्रधान कार्यालयके निरीक्षक एवं कोषाध्यक्ष के हस्ताक्षर |
|---|---|---|---|---|---|
| | | | | | ❀ |
| टोटल | | | | | |

हस्ताक्षर केन्द्राध्यक्ष..............................................................

तारीख.............................

(४)—ता० १५ मार्च तक यदि प्रधान कार्यालयसे परीक्षार्थियोंके प्रवेश पत्र न प्राप्त हों तो सूचना भेजनी चाहिये।

(५)—प्रवेशपत्र देते समय इस पर परीक्षार्थीसे हस्ताक्षर करा लेना चाहिये। उन्हें समझा देना चाहिये कि परीक्षा समयमें प्रवेशपत्र अपने पास रक्खें और जाँचके समय निरीक्षकको दिखा देवें।

❀ इसमें केन्द्राध्यक्षको कुछ नहीं लिखना चाहिये।

( ६ )—दो प्रतिष्ठित धार्मिकभावविशिष्ट सज्जनोंको निरीक्षक चुन लेना चाहिये और प्रधान कार्यालयसे आये हुए "निरीक्षकोंसे निवेदन" नामक पत्र पर उनके हस्ताक्षर कराकर उसे प्रधान कार्यालयमें भेज देना चाहिये।

( ७ )—परीक्षा प्रारम्भ होनेके पहिले ही प्रश्न पत्रोंका मुहर किया रजिस्टर्ड पारसल केन्द्राध्यक्षोंके पास पहुँच जायगा। उसे सुव्यवस्थित रूपसे तालेके भीतर रखना चाहिये। उसमें प्रतिदिनकी प्रत्येक परीक्षाके लिये प्रश्नपत्र अलग अलग मुहर लगे लिफाफेमें रहेंगे।

( ८ )—परीक्षा प्रारम्भके एक दिन पहिले परीक्षार्थियोंके स्थान परीक्षा भवनमें इस प्रकार नियत किये जायँ कि एक परीक्षाके दो विद्यार्थी पासमें न बैठें।

( ९ )—जिस लिफाफे पर जो परीक्षातिथि या दिवस लिखा हो उसी दिन परीक्षा-भवनमें निरीक्षकोंके सामने उसे ७ बजनेके १० मिनट पहले खोलना चाहिये। लिफाफे पर निरीक्षकोंसे प्रमाणरूपेण लिखा लेना चाहिये कि उनके समक्ष परीक्षाभवनमें अमुक तिथिको इतने बजे लिफाफा खोला गया।

( १० )—परीक्षाभवनमें परीक्षार्थियोंके प्रवेश करते समय यह जाँच भली भाँति करनी चाहिये कि प्रत्येकके पास प्रवेश पत्र है और इसके अतिरिक्त उनके पास कोई दूसरा कागज या पत्र पुस्तकादि नहीं है।

( ११ )—परीक्षार्थियोंको परीक्षा समयमें किसी प्रकारका अनुचित लाभ न उठाने देना चाहिये। यदि कोई परीक्षार्थी परीक्षा समयमें किसी अन्य परीक्षार्थीसे बात करते या प्रतिलिपि ( नकल ) करते पाया जाय तो इसे उसी समय परीक्षा भवनसे निकाल कर उसकी उत्तर कापी पर नोट कर देना चाहिये और प्रधान कार्यालयको सूचना भेजनी चाहिये।

( १२ )—११ बजे परीक्षार्थियोंसे उत्तर पुस्तकोंको ले लेना चाहिये और उसी समय उन्हें उसदिनके प्रश्नपत्रोंके लिफाफेके साथ एकही पैकेटमें बन्द कर निरीक्षकोंके सामने उस पर मुहर लगा कर उनके तथा अपने हस्ताक्षर सहित प्रधान कार्यालयसे भेजे गए प्रमाण-पत्रको उस पर चिपका देना चाहिये।

( १३ )—उपर्युक्त पैकेटको कपड़ेमें सिलाकर और उस पर मुहर देकर सेक्रेटरी, सं० वि० वि० महामण्डल भवन, जगतगंज बनारसके नाम उसी दिन उसे रजिष्ट्रीसे भेज देना चाहिये। यदि पार्सलका वजन ५ सेरसे अधिक होता हो तो रेल द्वारा उसे बनारस कैन्ट रेलवे स्टेशन पर भेजना चाहिये और उसकी बिल्टी शीघ्र रजिष्ट्री द्वारा प्रधानकार्यालयको भेज देना चाहिये।

( १४ )—परीक्षा समाप्त होते ही परीक्षा सम्बन्धी व्ययका पुर्जा निम्नांकित फार्मके अनुसार बनाकर प्रधान कार्यालयमें भेज देना चाहिये ताकि उसको निरीक्षण करके चुकता कर दिया जाय।

## परीक्षा व्ययका पुर्जा सन् १९

केन्द्र नाम.............................केन्द्र नम्बर...............................

| संख्या उपस्थित विद्यार्थी | | ब्योरा व्यय | | | | | जोड़ |
|---|---|---|---|---|---|---|---|
| प्रथमा मध्यमा | शास्त्री आचार्य | कागज | | | | | |
| | | जिल्ता | दाम | मसी | डा. व्य. | पानी | |
| | | | | | | | |

हस्ताक्षर केन्द्राध्यक्ष..............................

तारीख.............

इस बिलके साथ कागज स्याहीकी कीमतकी रसीद तथा रजिस्ट्री की भी रसीद होनी चाहिये।

( १५ )—परीक्षाकी उत्तर कापियोंके लिये छपे हुए आवरण पृष्ठ ( कवर ) प्रधान कार्यालयसे परीक्षा समयके कुछ दिन पूर्व ही केन्द्राध्यक्ष के पास भेज दिये जाते हैं। सादे या रूलयुक्त कागज लेकर एक दस्ते की दो कापी आवरण पृष्ठको ऊपर रखकर बनवा लेना चाहिये।

( १६ )—परीक्षाफल और उत्तीर्ण छात्रोंके प्रमाणपत्र केन्द्राध्यक्षके पास क्रमशः २ दो और ४ चार मास बाद भेजे जाते हैं। जो छात्र अपना परीक्षा फल अथवा प्रमाणपत्र अपने पतेसे मँगाना चाहेंगे उन्हें डाक व्यय भेजना चाहिये।

( १७ )—यदि प्रमाणपत्र खो जाय तो नियत परीक्षा शुल्कका आधा देने पर दूसरा ( डूप्लीकेट ) प्रमाणपत्र दिया जा सकता है।

( १८ )—उत्तर कापियोंकी जाँच दुबारा किसी प्रकार नहीं होती है। भ्रम निराकरणके लिये लब्धांक पुनः जोड़े जा सकते हैं। इसके लिये १) रुपया फीसके साथ प्रार्थना पत्र भेजना चाहिये।

( १९ )—शास्त्री और आचार्य परीक्षाके किसी एक पत्रमें अनुत्तीर्ण होने पर परीक्षार्थी अग्रिम परीक्षामें पूरा शुल्क देकर केवल अनुत्तीर्ण पत्रकी ही परीक्षा दे सकेंगे।

# पाठ्य ग्रन्थावली।

आयुर्वेद छोड़कर सभी परीक्षाओंमें निम्नाङ्कित धार्मिक और व्युत्पत्तिविषयक प्रश्नपत्र अनिवार्य हैं।

प्रवेशिका ( प्रथमा )

ये ही पत्र सभी प्रवेशिका परीक्षाओंके प्रथम और द्वितीय पत्र हैं—

प्रथम पत्र—१-आचार चन्द्रिका ( सम्पूर्ण )
२-धर्मप्रवेशिका ( „ )
३-हिन्दुधर्मोपदेशिका
} धर्म

द्वितीय पत्र—१-संक्षिप्त हितोपदेश (नीतिसंग्रहः)
२-स्वास्थ्य सदाचार (अथवा स्वास्थ्यरक्षाके सम्बन्धमें साधारण ज्ञान किसी ग्रन्थके आधार पर)
३-हिन्दी दीपिका
} व्युत्पत्ति

विशारद ( मध्यमा )

ये ही सभी विशारद परीक्षाओंके प्रथम और द्वितीय पत्र हैं—

प्रथम पत्र—१-धर्मतत्त्व
२-दुर्गासप्तशती (सम्पूर्ण हिन्दी भाष्य सहित)
३-महिम्न स्तोत्र ( मूल कण्ठस्थ )
} धर्म

द्वितीय पत्र—१-पञ्चतन्त्र ( संक्षिप्त संस्करण )
२-सचित्र भारतवर्षका इतिहास (श्रीमन्नालाल अभिमन्यु एम. ए.)
३-आरोग्य प्रकाश (गूलरगुण विकाश)
४-अनुवाद (भाषासे संस्कृत और संस्कृतसे भाषा)
} व्युत्पत्ति

शास्त्री।

प्रथम पत्र—१-धर्मविज्ञान ( प्रथमखण्ड )
२-गीतार्थ चन्द्रिका ( अध्याय १-६ )
३-अध्यात्मरामायण ( सम्पूर्ण )
४-भारतधर्म समन्वय
} धर्म

| | | |
|---|---|---|
| द्वितीय पत्र—१-शिवराज विजय, ( २ विराम ) | | |
| २-संस्कृत का सम्पूर्ण इतिहास ( पं० छज्जूराम विद्यासागर कृत ) | | व्युत्पत्ति |
| ३-ईशोपनिषद् | | |
| ४-अनुवाद (भाषासे संस्कृत और संस्कृतसे भाषा) | | |

आचार्य।

| | |
|---|---|
| प्रथम पत्र—१-धर्मविज्ञान ( सम्पूर्ण ) | |
| २-गीतार्थ चन्द्रिका ( सम्पूर्ण ) | धर्म |
| ३-कठोपनिषद् ( सभाष्य ) | |
| द्वितीय पत्र—१-परलोकतत्त्व ( सम्पूर्ण ) | |
| २-कर्मरहस्य " | व्युत्पत्ति |
| ३-मनुस्मृति १-६ अ. तक | |

४-अमरमङ्गलम् (नाटक) (म० म० पण्डित पञ्चानन तर्करत्न भट्टाचार्य विरचित)

उपर्युक्त अनिवार्य दो दो पत्रोंके अतिरिक्त भिन्न भिन्न विषयोंकी परीक्षाओंमें निम्नाङ्कित पत्र होंगे।

## व्याकरण परीक्षा।

### प्रवेशिका ( प्रथमा )

तृतीय पत्र—लघुकौमुदी ( सम्पूर्ण ) अथवा सारस्वत चन्द्रिका ( चुरादि तक ) अथवा मुग्धबोध ( मूल ) अथवा कलाप ( सन्धि, शब्द, धातु, आख्यात वृत्ति ) अथवा सुपद्म ( सन्धि, शब्द, धातु अट् प्रकरण तक ) अथवा संक्षिप्तसार ( सन्धि, सुबन्त तिङन्त वृत्ति )।

### विशारद ( मध्यमा )

तृतीय पत्र—१ सिद्धान्त कौमुदी। ( उणादि वर्जित कृदन्त तक, अष्टाध्यायी क्रमसे सूत्रोंका अर्थ अपेक्षित है ) अथवा १ आर्ष पाणिनीयं व्याकरणम् (पं० हरिशङ्कर पाण्डेय कृत)

अथवा—१ सारस्वतचन्द्रिका सम्पूर्ण, ( चन्द्रकीर्ति टीका ) २ सारमञ्जरी। अथवा १ मुग्धबोध सम्पूर्ण, ( दुर्गादास कृत कारक समास टीका ) २ कविकल्पद्रुम। अथवा १ कलाप सम्पूर्ण। ( दुर्गासिंहकृत वृत्तिसहित ) अथवा १ सुपद्म ( वृद्धितद्धित तक )। अथवा १ संक्षिप्तसार ( सम्पूर्ण )।

### शास्त्री।

तृतीय पत्र—१-सिद्धान्त कौमुदी स्वर वैदिकी प्रक्रिया, ( गणपाठ, धातुपाठ, लिङ्गानुशासन, उणादिप्रकरण सहित ) २-पाणिनीयशिक्षा, ( पं० नारायणदत्तकृत टीका )

३-परिभाषेन्दुशेखर, ४-महाभाष्य प्रथमाह्निक । अथवा—१-सारस्वत चन्द्रिका ( रामाश्रमी टीका ) २-लघुभाष्य, ३-लघुमञ्जूषा, ४-कारक चक्र । अथवा—१-मुग्धबोध, ( दुर्गादास-कृतटीका संपूर्ण ) २-कविकल्पद्रुम, ३-कारकचक्र । अथवा—१-कलाप, ( दुर्गासिंह कृत वृत्ति सहित सम्पूर्ण ) २-कातन्त्रसूत्र समास के णत्व षत्व के सूत्रों पर दुर्गासिंह कृत टीका, ३-नमस्कारवाद, ( कलाप चक्रसहित ) ४-त्रिलोचनपञ्जी, ५-कातन्त्र परिशिष्टका कारक प्रकरण । अथवा—१-सुपद्म व्याकरण, ( सम्पूर्ण ) २-कारकचक्र, ३-कविकल्पद्रुम ।

चतुर्थ पत्र—१-भट्टि काव्य सम्पूर्ण, २ लघुमञ्जूषा, ३ वृत्तरत्नाकर ।

आचार्य

तृतीय पत्र—१-पातञ्जल महाभाष्य, ( प्रथमाध्याय ) २-वैयाकरणभूषणसार ।

चतुर्थ पत्र—१ लघुशब्देन्दुशेखर । ( अव्ययीभावान्त )

महोपाध्याय ।

१—महाभाष्य सम्पूर्ण, २-स्फोटचन्द्रिका, ३-वाक्यपदीय, ४-शब्दशक्ति प्रकाशिका, ५-निरुक्त सम्पूर्ण, ६-शब्दकौस्तुभ, आर्ष पाणिनीयम् व्याकरणम् । ( पं० हरिशंकर पाण्येय कृत )

## साहित्य परीक्षा ।

प्रवेशिका ( प्रथमा )

तृतीय पत्र—१-रघुवंश ( १ से ५ सर्ग ) २-कुमारसम्भव (१ से ५ सर्ग) ३-श्रुतबोध ( पं० गौरीनाथ पाठक-सम्पादित )

विशारद ( मध्यमा )

तृतीय पत्र—१-किरात ( १ से ४ सर्ग ) २-रघुवंश ( ११ से १४ सर्ग ) ३-उत्तर-रामचरित सम्पूर्ण, ४-शिवराजविजय ( २ विराम ) ५-काव्यदीपिका ।

शास्त्री ।

तृतीय पत्र—१-साहित्यदर्पण ( १-२-३-६-७-१० परिच्छेद ) २-मुद्राराक्षस ३-वेणीसंहार, ४-अभिज्ञानशाकुन्तल ५-मृच्छकटिक ।

चतुर्थ पत्र—१-माघ ( १ से ४ सर्ग ) २-नैषध ( १ से ५ सर्ग ) ३-कादम्बरी पूर्वार्ध, ४-अमरमङ्गलम्, ( नाटक )

आचार्य ।

तृतीय पत्र—१-साहित्यदर्पण ४, ५ और ७ से १० परिच्छेद, २-कादम्बरीसम्पूर्ण, ३-नैषध ( ९ से १३ और १७ सर्ग ) ४-माघ, ( ११ से १४ सर्ग )

चतुर्थ पत्र—१-काव्यप्रकाशका साहित्यदर्पणके साथ तुलनात्मक अध्ययन । २-भारतचम्पू, ३-गद्य पद्य काव्य रचना ।

महोपाध्याय ।

१—काव्यप्रकाश, २-वासवदत्ता, ३-भारतचम्पू, ४-रसगंगाधर, ५-ध्वन्यालोक, ६-व्यक्तिविवेक, ७-भरतनाट्यसूत्र, ८-सरस्वती-कण्ठाभरण, ९-हर्षचरित ।

## पुराण परीक्षा ।

### प्रवेशिका ( प्रथमा ) ।

तृतीय पत्र—१ दुर्गा सप्तशती, ( मूलमात्र ) २-गंगालहरी, ३ सरस्वतीस्तोत्र ( द्विजेन्द्र कृत ) ४ वाल्मीकीय रामायण, ( सुन्दर काण्ड )

### विशारद ( मध्यमा )

तृतीय पत्र—१ वाल्मीकीय रामायण, (अयोध्याकाण्ड) २ श्रीमद्भागवत, (दशमस्कन्ध) ।

### शास्त्री ।

तृतीयपत्र—१-मार्कण्डेय पुराण, २-वाल्मीकीय रामायण, ( सम्पूर्ण ) ३-महाभारत, ( आदि, सभा, और भीष्मपर्व )

चतुर्थ पत्र—१ श्रीमद्भागवत, ( १-२-११ स्कन्ध ) २ अग्निपुराण, ३ पुराणपरिचय ।

### आचार्य ।

तृतीय पत्र—१ श्रीमद्भागवत, २ विष्णुपुराण, ३ ब्रह्मवैवर्तपुराण ।

चतुर्थ पत्र—महाभारत, ( सम्पूर्ण )

### महोपाध्याय ।

१—अष्टादश पुराणोंका रहस्यात्मक तथा सामञ्जस्यात्मक ज्ञान, २—उपपुराणोंका पर्यवेक्षण, ३—पुराणों पर एतद्देशीय तथा पाश्चात्य भिन्न भिन्न समालोचकोंके ग्रन्थोंका पर्यवेक्षण, ४-पुराणोंकी सत्यमर्यादाका रहस्यात्मकज्ञान, ५-इतिहास, ( समस्त पृथ्वीका साधारण ज्ञान और भारतवर्षका विशेषज्ञान ।

## आगम परीक्षा ।

### प्रवेशिका ( प्रथमा )

तृतीय पत्र—प्रपञ्चसार, ( १-२ पटल शंकराचार्य कृत )

अथवा—१ तन्त्रसार, ( प्रथम परिच्छेद कृष्णानन्द आगमवागीश कृत ) २ योगिनी तन्त्र ( १ से १० पटल )

विशारद ( मध्यमा )

तृतीय पत्र—१ प्रपञ्चसार, ( सम्पूर्ण ) अथवा-१-तन्त्रसार ( द्वितीय परिच्छेद कृष्णानन्द आगमवागीशकृत )

शास्त्री।

तृतीय पत्र—१ तन्त्रसार, ( पूर्वार्ध ) अथवा १ महानिर्वाणतन्त्र, ( पूर्वार्ध ) १ मन्त्र-महोदधि ( १—११ )

चतुर्थ पत्र—१ कालिका पुराण, २ प्राणतोषिणी। ( पूर्वार्ध )

आचार्य।

तृतीय पत्र—१ मन्त्रमहोदधि, ( सम्पूर्ण ) २ प्रत्यभिज्ञादर्शनम्, ३ तन्त्रसार ( सम्पूर्ण ) अथवा १ महानिर्वाण तन्त्र, ( सम्पूर्ण ) २ शारदातिलक।

चतुर्थ पत्र—१ शिवसूत्र, २ प्राणतोषिणी, ( सम्पूर्ण ) ३ रुद्रयामल।

महोपाध्याय।

१ रुद्रयामल, २ ब्रह्मयामल, ३ विष्णुयामल, ४ तन्त्रसार, ५ मन्त्रमहोदधि, ६ शारदा-तिलक, ७ तारारहस्य, ८ प्राणतोषिणी, ९ मेरुतन्त्र, १० श्यामारहस्य, ११ महानिर्वाणतन्त्र, १२ भैरवतन्त्र, १३ शाक्तप्रमोद। इन तान्त्रिक ग्रन्थोंका यथार्थ ज्ञान।

## धर्मशास्त्र परीक्षा।

प्रवेशिका ( प्रथमा )

तृतीय पत्र—१ मनुस्मृति ( दूसरा और १२ वाँ अध्याय ) २—मीमांसापरिभाषा ( पं० श्रीगोपालशास्त्रि दर्शनकेशरिकृत दीपिकासहित )

विशारद ( मध्यमा )

तृतीय पत्र—१ मनुस्मृति, ( तीसरा और चौथा अध्याय ) २ हिन्दूधर्मोपदेशिका, ३ दत्तकमीमांसा।

शास्त्री।

तृतीय पत्र—१ मनुस्मृति, ( ५ से ८ अध्याय ) २ निर्णयसिन्धु, ( पहला परिच्छेद ) ३ याज्ञवल्क्यस्मृति, ( व्यवहाराध्याय ) ४ अशौचनिर्णय।

चतुर्थ पत्र—१ पारस्कर गृह्यसूत्र, २ श्राद्धविवेक, ( रुद्रधरकृत ) ३ कालमाधव, ४ प्रायश्चित्तविवेक।

आचार्य।

तृतीय पत्र—१ मनुस्मृति, ( सम्पूर्ण कुल्लूकभट्टटीका ) २ याज्ञवल्क्यस्मृति, ( मिता-क्षरा सहित ) ३ पराशरस्मृति।

चतुर्थ पत्र—१ शंख लिखित स्मृति, २ पारस्कर गृह्यसूत्र, ३ आपस्तम्ब सूत्र।

महोपाध्याय।

१—पारस्कर गृह्यसूत्र,
२—बौधायन,
३—लाट्यायन,
४—आपस्तम्ब,
} इन सूत्रोंका भाष्य

५—निर्णय सिन्धु, ६—प्रायश्चित्तेन्दु शेखर, ७—वीरमित्रोदय, ८—याज्ञवल्क्यस्मृति, (मिताक्षरा सहित) ९—बालम्भट्टी,
} इन ग्रन्थोंका ऊहापोहात्मक-ज्ञान।

## ज्यौतिष परीक्षा।

### प्रवेशिका (प्रथमा)

तृतीय पत्र—१-फलित संग्रह, (स्वर्गीय पं० रामयत्न ओझाकृत) २-लीलावती, (सम्पूर्ण)

### विशारद (मध्यमा)

तृतीय पत्र—१-मुहूर्त्तचिन्तामणि, (मूल) २-लघुपाराशरी, ३-बीजगणित। (एक वर्ग-समीकरण तक)

### शास्त्री।

तृतीय पत्र—१-जैमिनीसूत्र भाष्य, (स्वर्गीय पं० रामयत्न ओझाकृत) २ बृहज्जातक, १० अध्याय तक, ३ बृहद्वास्तुमाला, (पं० रामनिहोरद्विवेदिकृत) अथवा १ बीजगणित, (सम्पूर्ण) २ रेखागणित, (४ अध्याय) ३ ग्रहलाघव (सूर्यग्रहणाधिकार तक)

चतुर्थ पत्र—१-नीलकण्ठी, (सटीक) २-षट्पञ्चाशिका।

### आचार्य।

तृतीय पत्र—१-केशवपद्धति, (प्रौढ़ मनोरमा-सहित) २ बृहत्पाराशर। अथवा १ सिद्धान्त शिरोमणि, (गणिताध्याय और गोलाध्याय) २ सरल त्रिकोणमिति चापीय-त्रिकोणमिति।

चतुर्थ पत्र—१-नरपतिजयचर्या, २-सूर्यसिद्धान्त, ३-कैतकी।

### महोपाध्याय।

१—पाराशर और जैमिनीके सिद्धान्तोंका यथार्थ ज्ञान, २ संग्रहशिरोमणि, ३ पाराशर होरा, ४ बृहज्जातक, ५ बृहत्संहिता, ६ श्रीमद्भागवतका पञ्चमस्कन्ध, ७ देवीभागवतका अष्टमस्कन्ध, ८ उपपत्तीन्दुशेखर। (म० म० श्रीदुर्गाप्रसाद द्विवेदिकृत)

## कर्मकाण्ड परीक्षा।

### प्रवेशिका ( प्रथमा )

तृतीय पत्र—१ ग्रहशान्ति, २ षोडशसंस्कारपद्धति, अथवा १ भूदेवपद्धति, अथवा १ पशुपतिपद्धति, अथवा १ कालकंठीपद्धति।

### विशारद ( मध्यमा )

तृतीय पत्र—१ लघुकर्मकाण्डदर्पण, २ मूलशान्ति, ३ प्रेतमञ्जरी, ४ नित्यकर्मविधि ( पं० गोपालचन्द्रवेदान्तशास्त्रीकी ) अथवा १ आह्निकतत्त्व, २ देवप्रतिष्ठातत्त्व, ३ ग्रहयागतत्त्व, ४ शुद्धितत्त्व, ( अन्त्येष्टि प्रकरण )

### शास्त्री।

तृतीय पत्र—१ प्रायश्चित्तपद्धति, २ पञ्चांगपद्धति, ३ प्रतिष्ठामयूख।

चतुर्थ पत्र—१ पार्वणश्राद्ध, २ एकोद्दिष्टश्राद्ध, ३ कुण्डसिद्धि, ४ धर्मसिन्धु।

### आचार्य।

तृतीय पत्र—१—श्राद्धविवेक, सर्वशेषप्रतिष्ठाप्रकाश, २ शतचण्डीविधि।

चतुर्थ पत्र—१—निर्णयसिन्धु, २ दत्तकविधि, ३ मन्त्रार्थदीपिका।

### ( १ ) पौरोहित्यरत्न ( उपाधि ) परीक्षा।

१—पारस्कर गृह्यसूत्र, ( कर्क प्रभृति भाष्य )। २—आपस्तम्ब धर्मसूत्र, ३—अग्निष्टोमपद्धति, ( स्वशाखीय ) ४—कुण्डमण्डप सिद्धि, ५ रुद्राष्टाध्यायी, ६—हिन्दुसंस्कारों तथा पर्वोंका वैज्ञानिक रहस्य।

### ( २ ) देवार्चनरत्न ( उपाधि ) परीक्षा।

१ दशकर्मपद्धति, २ रुद्राष्टाध्यायी, ३ नित्यहोमपद्धति, ४ पञ्चमहायज्ञ, ५ ग्रहशान्ति, ६ प्रतिष्ठामयूख।

### ( ३ ) श्रौतकर्मनिष्णात ( उपाधि ) परीक्षा।

१ मन्त्रसंहिता, ( सस्वर ) २ श्रौताग्न्याधानपद्धति, ३ अग्निहोत्रपद्धति, ४ पुत्रेष्टिपद्धति, ५ श्रौतसूत्र, ( परिभाषा और प्रायश्चित्त अध्याय ) ६ आपस्तम्ब धर्मसूत्र, ७ अग्निष्टोमपद्धति, ८ ब्राह्मणभाग दर्शपौर्णमासीय, ९ परलोकतत्त्व, १० गीतार्थचन्द्रिका।

## व्याख्यान परीक्षा

### प्रवेशिका ( प्रथमा )

तृतीय पत्र—१ नित्यकर्मविधि, ( पं० गोपालचन्द्र वेदान्तशास्त्री ) २ भारत भारती, ३ व्याख्यानकला, ४ शीलनिरूपण, ( महाभारत से ) ५ तत्त्वबोध।

## विशारद ( मध्यमा )

तृतीय पत्र—१ सदालाप हिन्दी, ( भूदेव रचित ) २ हिन्दूधर्मोपदेशिका, ३ कठोपनिषद्, ४ मनुस्मृति, ( १-४ अ० ) ५ काव्यदीपिका, ६ पञ्चदशी ( ५ प्रकरण ) ।

## शास्त्री ।

तृतीय पत्र—१ पञ्चदशी ( सम्पूर्ण ) २ सत्यार्थप्रकाश, ३ दयानन्द तिमिर-भास्कर, ४ भूगोल, ५ इतिहास, ६ तुलसीकृत रामायण, ७ हिन्दी साहित्यका संक्षिप्त इतिहास ।

चतुर्थ पत्र—१ मनुस्मृति, २ ऋषिविकासिसंलाप, ३ आर्यविद्यासुधाकर, ४ ईश, और केन ( पं० श्रीपाद दामोदर सातवलेकर ) ६ प्रश्न, ७ ऐतरेय, ८ तैत्तिरीयोपनिषद्, ९ सांख्यतत्त्वकौमुदी, १० वैयासिकन्यायमाला, और ११ साहित्यदर्पण ।

## आचार्य ।

तृतीय पत्र—१ व्याख्यानरत्नमाला ( पं० कन्हैयालालमिश्र कृत ) २ विष्णुपुराण ३ वाल्मीकीय रामायण, ४ महाभारत ( सभा और शान्तिपर्व ) ५ गीतारहस्य ( स्व० लोकमान्य बालगंगाधर तिलककृत )

चतुर्थ पत्र—१ भगवद्गीताका समालोचनात्मक ज्ञान, २ गीतामें ईश्वरवाद, ३ हिन्दुसंस्कारों तथा पर्वोंका वैज्ञानिक गवेषणात्मक ज्ञान, ४ भागवतस्कन्ध ५, १०, ११, १२, ५ छान्दोग्योपनिषद्, ६ समन्वय, ( डो० भगवानदासकृत ) ७ धम्मपद, ८ धर्मप्रवर्तक-महापुरुषोंकी जीवनी, ९ बुद्धचरित, १० श्रीज्ञानसागरी, ११ पुरुषार्थसिद्धिका उपाय, १२ वेदान्तसूत्र । ( शाङ्करभाष्यसहित )

## महोपाध्याय ( व्याख्यान वाचस्पति )

[ इसको वही विद्वान् दे सकेंगे जो किसी यूनिवर्सिटी की आचार्य परीक्षा पास हों या तत्सम योग्यता रखते हों। निबन्ध रचनाके लिये निम्नलिखित ग्रन्थोंसे सहायता लेनी होगी । ]

१-महाभारत । २-भागवत । ३ वाल्मीकीय रामायण । ४-दर्शनशास्त्र सभाष्य ५-छान्दोग्य उपनिषद् । ६-ऋग्वेद भाष्य भूमिका । ७-निरुक्त । ८-यजुर्वेद संहिता । ९-अथर्ववेद संहिता । १०-भिन्न भिन्न सम्प्रदायोंके ग्रन्थ तथा उपधर्म विषयक ग्रन्थ । ११-वेदों और पुराणोंपर प्राच्य तथा प्रतीच्य विद्वानोंके गवेषणात्मक ग्रन्थ । १२-भूगोल, १३-इतिहास, ( पृथ्वीका साधारण ज्ञान और भारतवर्षका विशेषज्ञान ) १४-धर्मविज्ञान, १५-गीतार्थ चन्द्रिका, १६-योगवासिष्ठ १७-सर्वधर्मका समन्वयात्मक ज्ञान, १८-रामचरितमानस, १९-योगदर्शन, २०-ब्रह्मसूत्र पर शांकर तथा वाक्ति भाष्य ।

## धर्माचार्य ( उपाधि ) परीक्षा।

परीक्षार्थियोंको अखिल भारतवर्षीय धार्मिकाध्यात्मिक संस्कृत विश्वविद्यालयकी किसी आचार्य परीक्षामें उत्तीर्ण होना चाहिये। अथवा किसी विश्वविद्यालयकी सर्वोच्च श्रेणीकी किसी संस्कृत उपाधि परीक्षामें उत्तीर्ण होना आवश्यक है। तत्सम योग्यता के लिये किसी दो प्रसिद्ध विद्वानोंसे लिखित प्रमाण देने पर भी यह परीक्षा दे सकते हैं, निबन्ध रचनामें निम्नलिखित ग्रन्थोंसे सहायता लेनी होगी।

वैदिक सप्तदर्शन सभाष्य यथा—( न्याय, वैशेषिक, योग, सांख्य, कर्म मीमांसाका पूर्व और उत्तर भाग, दैवीमीमांसा और उत्तर मीमांसा ब्रह्मसूत्र ) शुद्धाद्वैत, विशिष्टाद्वैत, द्वैताद्वैत, अद्वैत और द्वैत तथा पाशुपत आदि साम्प्रदायिक दर्शनोंका ज्ञान। दशोपनिषद् शांकरभाष्य तथा यथोपलब्ध साम्प्रदायिक भाष्यसहित। १–धर्मविज्ञान, २–भारतधर्मसमन्वय ३–गीतार्थ चन्द्रिका, ४-मन्त्र महोदधि, ५-देवी भागवत, ६–श्रीमद्भागवत, ७-विष्णुपुराण, ८-महाभारत, ९-तन्त्रसार, १०-महानिर्वाणतन्त्र, जैन और बौद्ध दर्शन। प्राच्य प्रतीच्य दर्शनोंका तुलनात्मक ज्ञान।

## वेद परीक्षा।

### प्रवेशिका ( प्रथमा )

तृतीय पत्र—१ रुद्राष्टाध्यायी सम्पूर्ण, ( कण्ठस्थ ) २ वेदपरिचय प्रथम भाग ( पं० श्रीपाददामोदर सातवलेकर )

### विशारद ( मध्यमा )

तृतीय पत्र—१ मन्त्रसंहिता सम्पूर्ण, २ वेदपरिचय द्वितीय भाग ( पं० श्रीपाददामोदर सातवलेकर )

### शास्त्री।

तृतीय पत्र—१ शुक्ल यजुर्वेद संहिता, २ पारस्करगृह्यसूत्र, ३ कुण्डमण्डप सिद्धि।

चतुर्थ पत्र—१ निरुक्तालोचन, ( सामाश्रमी ) २ शतपथब्राह्मण, ३ गृह्यसूत्र, ४ षोडशसंस्कार प्रयोग।

### आचार्य।

तृतीय पत्र—१ निरुक्त, ( १ से ४ अध्याय ) २ शुक्लयजुःसंहिता, सभाष्य ३ वैदिक अग्निविद्या ( पं० श्रीपाददामोदर सातवलेकर )

चतुर्थ पत्र—१ निरुक्त ( सम्पूर्ण ), २ कठोपनिषद्, ३ कात्यायन श्रौतसूत्र।

### महोपाध्याय

दश उपनिषदों पर साम्प्रदायिक भाष्योंकी तुलनात्मक समालोचना, शतपथ ब्राह्मण,

तथापि—द्वादशवर्षानन्तरमेष शुभावसरो मिलति, तावत्तु एको युग एव व्यत्येष्यति, मध्ये किं भविष्यति किं न भविष्यति, श्वासास्तावत् स्थास्यन्ति यास्यन्ति वा ? को विश्वासः ? एतत्सर्वमालोच्य सङ्कोचः परित्यक्तः। गमनाय मतिर्दृढा कृता, मुहूर्तोऽवलोकितः, सहचरोऽन्वेषितः, आवश्यकवस्तुजातञ्च सङ्गृहीतम्। एवं यात्रानिश्चये जाते सूर्योदय—सम्पादकानां काव्यतीर्थविद्याभूषण-श्रीमदवधेशप्रसादद्विवेदानां मदेकशुभचिन्तकानामात्मनो निवासाऽशनप्रबन्धौपयिकं पत्रमेकमादाय मेलातः पूर्वमेव पौषशुक्लपक्षे पञ्चम्यां श्रीजगन्नाथप्रसादद्विवेदिना मनोविनोदिना सहचरेण सह मध्याह्ने एकवादनकालिकेन धूमशकटेन प्रस्थितः सायमस्तं गच्छति च भगवति भास्करे सानुरागं प्रयागं प्राप्तः। शकटीस्थानात्खलु आरादेव दारानगरं वर्तते। तत्रैव वर्णाश्रम-स्वराज्यसङ्घस्य स्वागतसमितिकार्यालये प्रथमरात्रिर्यापिता।

द्वितीयदिने प्रातःकाल एव दन्तधावनान्तं नित्यकर्म निर्वर्त्य त्रितापहारिण्यां त्रिवेण्यां स्नात्वा मध्याह्ने आलुकशाकेन सह रोटिकां भुक्त्वा क्षणं विश्रम्य अपराह्णे शास्त्रधर्मप्रचारसभाया मन्त्रिपदभाजां काव्यपुराणतीर्थ-साहित्यभूषण—श्रीगोपालदत्तशास्त्रि-महोदयानां सकाशमहं गतो यत्रात्मनः सूर्योदयसम्पादकप्रदत्तपत्रद्वारा परिचयं प्रकाश्य स्थान-जलपानभोजनादिचिन्तातोऽवकाशं लब्धवान्। तद्दिनादारभ्य पौषशुक्लपूर्णिमापर्यन्तं शास्त्रिमहोदयानां प्रबन्धेन कलिकातावासिनां श्रीवैष्णवसम्प्रदायाचार्याणां श्रीमधुसूदनाचारीमहोदयानां स्थाने (तत्रत्यभाषायां बाडा) सानन्दं विदूरितविषादं भगवतः प्रसादं (भक्तादिकं) भक्षयतो, समाऽष्टौदिनानि व्यतीतानि। ततः परं माघकृष्णप्रतिपद आरभ्य माघशुक्लद्वितीयापर्यन्तं शास्त्रधर्मप्रचारसभाया एव विशाले मण्डपे समागतानामुपदेशकानां निवासाय निर्मितासु कासकुटिकासु सनातनधर्ममहासम्मेलनकरणाय बद्धपरिकरैः शास्त्रार्थमहारथिभिः श्रीवेणीमाधवशुक्लशास्त्रिभिः सह वासमकरवम्। एषु दिवसेषु शास्त्रिमहोदयानां पातिव्रत्यपरायणायाः सहजसौजन्यसमलङ्कृतायाः स्त्रीसन्ध्यानामकपुस्तिकालेखिकाया मान्यायाः श्रीसावित्रीदेव्या अनुग्रहेण तत्सम्पादितानेकविधस्वादुपाकपरिग्रहेण च मे मङ्गलमयानि दिनानि व्यतीयुः। अथैवं प्रकारेण प्रयागं प्राप्तेन मया यत्किञ्चिदवलोकितं तत्सर्वमिदानीं तेषां सूर्योदयपाठकानां ज्ञानाय विनोदाय च लिख्यते, यैः चिटिका (टिकट) निरोधवशात्प्रयागे गमनायाऽवसरो न लब्धो नापि कस्यापि सुहृदो मुखेन मेलावर्णनमाकर्णितं नाऽप्यग्रिमे कुम्भे गमनस्याशा वर्तते आशासे एतद्वर्णनेन पाठकानां मेलाया यत्किञ्चित्स्वरूपज्ञानं मनोविनोदश्च भवेत्।

( मेलावृत्तम् )

इयं मेला त्रिवेणीतटे एकक्रोशमिते स्थाने लगति। मध्ये एको विस्तृतः प्रधानमार्गो निर्मीयते। मार्गस्योभयोः पार्श्वयोः प्रथमं मण्डलेश्वराणां, साधूनां, सभासम्मेलनादीनां च पङ्क्तिर्भवति। तत्पश्चाद्भागे स्नानार्थमागतानां निवासाय तत्रत्यतीर्थपुरोहितादिभिर्निर्मिता अनेकाः कुटिका-(तत्रत्यभाषायां कुटिया) स्तिष्ठन्ति। प्रधानमार्गात् किञ्चिद् दूरे दूरे मलत्यागाय मूत्रत्यागाय च आवृतस्थानानि सन्ति। स्थले स्थले च पिपासादिशान्त्यर्थं जलयन्त्राणि निर्मितानि। क्वचन क्वचन जलपूरिताः भूमौ गर्ता निर्मीयन्ते यत्रस्थजलस्योपयोगोऽग्निकाण्डे जाते भवति। अथ मेलाप्रबन्धकारिणी समितिः, अन्याश्च बह्व्यः सेवासमितयः, रक्षापुरुषस्थानम्, (पुलिश स्टेशन) पत्रालयः (पोष्ट) प्रदर्शनी, वाणिज्यं पण्यानि, भोजनालयाः प्रेक्षागृहाणि (तमासाघर) च प्रधानमार्गस्य उभयपार्श्वस्थितप्रथमपङ्क्त्योरेव सन्निवेश्यन्ते। अस्मिन् वर्षे चिटिकानिरोधान्न पूर्णकुम्भवत्समारोह आसीत्। तथापि वृत्तपत्रानुसारम् दशलक्षमितैर्मानवैः कुम्भस्नानं कृतमेव। अहो धर्मस्य माहात्म्यम्! अथाऽवस्तात्प्रधानसभानां परिचयो दीयते। सभास्तावत्तत्र द्विविधा भवन्ति सनातनधर्मप्रचारिण्यः सनातनधर्मविरोधिन्यश्च। तत्र सनातनधर्मसभा मुख्यमेलास्थाने भवन्ति तद्विरोधिन्यश्च सभास्ततः किञ्चिद् दूरेऽन्यत्र भवन्ति। सनातनधर्मप्रचारकसभास्तावत् क्रमेण निरूप्यन्ते।

## शास्त्रधर्मप्रचारसभा

मेलायां प्रधानमार्गस्यारंभ एव एकपार्श्वे प्रथममेषा सभा सर्वातिशायिशोभासमन्विते विशाले मण्डपे भवतिस्म। अस्याः संस्थापकः सञ्चालकश्च एक एव महापुरुषः श्रीउपेन्द्रनाथ सेन गुप्तमहाशयः (रिटायर्ड डिप्टी कलक्टर कलकत्ता) स्वकीयेनैव व्ययेन सर्वं कार्यं सम्पादयति। चतुर्ष्वपि कुम्भेषु तत्र तत्रेयं सभा याति तद्द्वारा च सनातनधर्म प्रचारो विधीयते। आङ्ग्ल-हिन्दी-वङ्गभाषासु प्रकाशितानि विविधधार्मिकपुस्तकानि एतत्सभाद्वारा मूल्यं विनैव लक्षाधिकसंख्यायां वितीर्णानि वितीर्यन्ते च। इदमत्र वैशिष्ट्यमस्ति। अस्याः सभाया अधिवेशनं माघकृष्णप्रतिपद आरभ्य माघशुक्लद्वितीयापर्यन्तमभूत्। अत्रैव सनातनधर्ममहासम्मेलनमपि कर्तुं योजना कृताऽसीत् परं सभादिनेष्वेव दुर्दिनतया न सर्वं कार्यं यथारुचि सम्पादयितुं पारितं तत्प्रबन्धकैः। प्रतिदिनमत्र दिने द्विवादनतः सायं यावत् कथा कीर्तनं व्याख्यानानि च भवन्ति स्म। अत्रैव श्रीभारतधर्ममहामण्डल-

प्रचारका अपि संमिलिता आसन्। प्रचारमन्त्रिणः धर्मरञ्जन पण्डित धूमावतीप्रसाद्-पाण्डेयमहोदया गता आसन्। अस्यां व्याख्यातारः शास्त्रार्थमहारथि श्रीवेणीमाधव-शुक्ल शास्त्रिणः, काव्यपुराणतीर्थ-साहित्यभूषण श्रीगोपालदत्त शास्त्रिणः एतल्लेखलेख-कश्चेति त्रयोऽभूवन्। अन्येऽपि विद्वांसः समये समये समागत्य प्रवचनं विदधति स्म। अत्र रामलीलाऽपि अभूत्। एतत्सभातोऽग्रे संलग्नमेव—

## सनातनधर्म दिग्विजयमण्डलम्

इतिनाम्नाप्रसिद्धं मण्डलमासीत् यस्याः संस्थापकाः सञ्चालकाश्च भारतप्रसिद्ध-व्याख्यातारो विदेशेऽपि सनातनधर्मप्रचारकर्तारः शास्त्रार्थमहारथि श्रीमाधवाचार्य-शास्त्रिणः सन्ति। एभिरत्र विष्णुमहायज्ञः कृतः। औषधालयस्यापि प्रबन्धः कारितः। एतेषां प्रवचनं शास्त्राधर्मप्रचारसभाया एव मण्डपे भवति स्म। एभिः सह श्रीदीनानाथशर्म "भूषण" महोदयस्यापि व्याख्यानं तत्रैव अभूत्।

## श्रीचन्द्रउपदेशकसभा-फ्री रिडिङ्गरूम

दिग्विजयमण्डलस्याग्रे इयं संस्थाऽसीत्। अत्रापि प्रातः सायञ्च सनातनधर्म-प्रचारो ध्वनिक्षेपक-(लाउड स्पीकर) मन्त्रसाहाय्येन विशेषरूपेण अभूत्। अस्याः संस्थायाः सर्वतोऽधिकं महत्त्वमिदमासीद् यदत्र जनताया हिताय शता-धिकानि सर्वभाषाणां समाचारपत्राणि पाक्षिकमासिकपत्राणि धार्मिकपुस्तकानि च रक्षितान्यासन्। यत्र प्रतिदिनमनेकसहस्रजनाः पत्रपुस्तकाद्यध्ययनाय समागच्छन्ति स्म विश्राम्यन्ति स्म च तत्र शताधिकासु सङ्कलितासु कूर्चीसु (कुर्सी)। इयं जनहितैषिणी संस्था दक्षिणहैदराबादस्थैरुदासीनसाधुभि निजव्ययेनैव सञ्चाल्यते। सम्प्रति एतत्प्रबन्धकपदं श्रीपूरनदास महोदया भूषयन्ति। साधूनां कृतेऽनुकरणीयेयं संस्था वर्तते। साधुसन्तमहन्तप्रभृतीनां मठसञ्चितस्य धनराशेरुपयोगो यदि एवं विधेषु सर्वजनहितकारिकार्येषु विधीयेत तर्हि कतिपयकालात् धनस्यदुरुपयोगेन साधुसमाजस्य कलङ्कलेखाङ्कितं मुखमण्डलमचिरादेव यशःसमुज्ज्वलं संपद्येत प्रतिष्ठा च वर्द्धेत। एतदग्रे-

## गीताधर्म प्रचारसभा—

मिलति स्म। जनमनोऽनुकर्षणाय विविधविचित्रवस्तुनिचयचमत्कृतेऽस्या व्याख्यानमण्डपेऽहरहः सायंकाले गीताधर्मनामकमासिकपत्रसञ्चालकानां गीताधर्म-प्रचारणपरायणानां स्वामि श्रीविद्यानन्द मण्डलेश्वर महोदयानां भक्तिविषयमवलम्ब्य प्रवचनं महति जनसमुदाये भवति स्म।

### गीता ज्ञान यज्ञ–

नाम्ना निर्मितं सुविशालं मण्डपं दृष्टिपथमायातिस्म। एष ज्ञानयज्ञ समारोहोऽखिलभूमण्डलप्रसिद्धाया धर्म-ज्ञान-भक्तिप्रचारैकव्रताया अतिशयाल्पमूल्येन धार्मिकसाहित्यप्रचारे समुपार्जिताऽमूल्ययशोवैभवाया गोरखपुरीय-गीताप्रेस-संस्थायाः प्रबन्धेन चलतिस्म। अत्राऽहर्निशमखण्डकीर्तनं, गीताया अखण्डपाठः, दिने द्विवादनाद् रात्रौ नववादनपर्यन्तं गीताप्रवचन-व्याख्यानादिकञ्चेति तत्रत्यो दैनिकः कार्यक्रम आसीत्। गीताप्रेससंस्थाया एकतमसञ्चालकानां पण्डित लादूरामजी महोदयानां स्वाभाविक स्नेह-सौजन्याऽनुनयवशीभूता विविधा विद्वांसस्तत्रागत्य समये समये प्रवचनविधिं सम्पादयन्ति स्म। यथा म. म. गिरिधरशर्मचतुर्वेदाः श्रीमदखिलानन्दकविरत्नमहोदया श्रीमाधवाचार्य शास्त्रिणः एवञ्चान्येऽपि। एकदिने अहमपि सेवां कृत्वा सौभाग्यभागभवम्।

### सनातनधर्म महासभा–

इयं सभा श्रीमन्मालवीयमहोदय सञ्चालिताऽस्ति। अस्या अपि सुविस्तृते प्राङ्गणे क्वचन भागवतपरायणम्, क्वापि औषधवितरणम्, एकत्र यज्ञक्रिया अपरत्र सुविशाले सभामञ्चे कथा-कीर्तन-गायन-व्याख्यानादिकम् अन्यत्र च महावीरदल-सङ्घटनञ्चेति वहूनि धार्मिककृत्यानि समारोहेण सह भवन्ति स्म। रात्रौ रामलीला-नाटकादिकस्य च भक्तिसंवर्द्धनार्थं योजना विहिताऽसीत्। अतः परं—

### वर्णाश्रम स्वराज्यसंघः

स्वकीये सर्वाऽपेक्षया विस्तारभाजि भूभागे विराजते स्म। अत्र परितोऽनेकाः कासकुटिका वस्त्रकुटिकाश्च समागतानां प्रतिनिधीनां सदस्यानां महामहोपदेशकानाञ्च निवासाय सज्जीकृता आसन्। मध्ये च विशालं वितानमधिवेशनकरणाय सभा-मञ्चादिभिरलङ्कृतमभूत्। पूर्वमत्र अखिलभारतीयं वार्षिकमधिवेशनं कर्तुमधिकारिणां विचार आसीत्परं पश्चात् चिटिकानिरोधे जाते एष विचारः परित्यक्तः। साधारणतया तु प्रतिदिनमेव पूर्वाह्णेऽपराह्णे च श्रीधर्मदत्तवेदशास्त्रिणां युक्तप्रान्तीय-मन्त्रि-सन्मित्रप्रवर श्रीकल्पनाथशर्मणां च निरीक्षणे कथाव्याख्यानादिकं प्रचलति स्म।

### अन्यसभाः

मेलायामेव प्रयागहिन्दूसभा, हरिजनसेवकसंघः, भारतसेवाश्रमसंघश्चेति सभाः सनातनधर्माविरोधेन निजप्रचारं कुर्वन्ति स्म। परं श्रोतृसंख्या तत्र तत्र न्यूनैव दृष्टा।

उपर्युक्तसनातनधर्मसभा विहाय बहुनां मण्डलेश्वराणां तथा अखाड़ानाम्ना प्रसिद्ध-संस्थानाञ्च स्थानेषु धार्मिकव्याख्यानं श्रूयते स्म।

## सनातनधर्मविरोधिन्यः सभाः

मेलातः किञ्चिद्दूरे एतादृशसभानां निवेश आसीत्। तत्र आर्यसमाजसभा सरगंगारामविधवासहायकसभा, आदि हिन्दूसभाचेत्यादिसभाः धार्मिकस्वरूप-हीनं कृषिप्रदर्शनादिकं च स्वमुद्देश्यं पूरयन्ति स्म। मया तत्र तत्र गत्वा सर्वं कृत्यमवलोकितम्। सरगंगारामविधवासहायकसभायां—

### "विधवाविवाहके सम्बन्धमें शिवपार्वतीका सम्वाद"

इति नामक पुस्तिकां दृष्ट्वाऽधीत्य च महदाश्चर्यमभूत्। अस्यां शिवपार्वतीसम्बादस्य कल्पनां प्रश्नोत्तररूपेण विधाय समाप्तौ शिवमुखेन पार्वतीं प्रति श्लोकद्वारा विधवाविवाहसमर्थनं कारितमस्ति। ग्रामीणजनता इमं काल्पनिकं सम्बादं सत्यं मत्वा महति भ्रान्तिगर्ते पततीति मया प्रत्यक्षीकृतम्। विधवाविवाहप्रचारस्यैष पन्थाः सर्वथा घृणितोऽसभ्यजनोचितः सनातनधर्मावलम्बिभिर्विरोद्धव्यो निरोद्ध-व्यश्चेति मे मतम्। अन्यथा तैरयमेव प्रयोगः सर्वेष्वपि सिद्धान्तेषु प्रयोक्ष्यते। श्रीमन्तः पाठकमहाभागाः! आत्मनो मेलायाः सभासम्मेलनादीनाञ्च एष समासतः परिचयः श्रीमतां सेवायामुपस्थापितः। मन्ये एतावता श्रीमतां मेलाऽदर्शन-जनितशोकापनोदो विनोदश्च संपद्येत। हा एकमवशिष्टं वृत्तम्! प्रधाने स्नानदिने दुर्दिनतया स्नानार्थिभिर्महत्कष्टमनुभूतम्। दिनत्रयं सततं स्वल्पा वृष्टिरभूत् अतो-बहूनि सम्मेलनानि सम्यक्तया नाऽभूवन्। यथा युक्तप्रान्तीय-संस्कृताध्यापकसंघः शाक्तसम्मेलनम् च। पङ्किले मार्गेऽनेके स्खलिताः पतिताश्च। अनया दृष्ट्या श्रीमतां तत्र न गमनं शोभनमेव जातम्। एतल्लेखपठनमात्रेणैव सन्तोषो विधीयतामिति।

## धर्म-संघः

भारतप्रसिद्धमहात्मभिः पूज्यपादैः श्रीकरपात्रिमहोदयैर्निजकराम्बुजद्वारा विहित-बीजारोपणो निरन्तरं प्रवचनपीयूषधारानुसेचनसंवर्द्धितकलेवर एष धर्मसंघमहीरुहो मेलायामनेकशाखाप्रशाखादिसमन्वितत्तयाऽखिलभारतीयं रूपमादधानो बहूनां तापत्रयसंतप्तचेतसां जनिजुषां सुखशान्तिकरः सन्तापहरश्चाऽसीत्। एतस्य सुविशाले वितानमण्डपे नैकेषां महनीयमहात्मनां करपात्रिमहोदयानाञ्च ज्ञानगाम्भीर्यपूर्ण-

प्रवचनं जिज्ञासुजनानां चेतश्चमत्करोतिस्म। अतिरुद्रयज्ञोऽप्यत्रानेकैश्चतुर्वेदविद्भि-र्वैदिकैरनुष्ठितः। अतः परं समीप एव—

### बालिका रामादेवी—

निजनैसर्गिक स्वरमाधुरीमसृण-कीर्तनव्याख्यानादि द्वारा समुपस्थितश्रोतृवृन्द-मानन्दयन्ती कमपि पूर्वजन्मार्जितमपूर्वं संस्कारमाविष्कुर्वन्ती साक्षात् पुनर्जन्म-सिद्धान्तप्रमाणभूतेव विराजतेस्म। बाल्य एवैतादृशविशेषशक्तिसमन्विताभिमां द्रष्टुमेव सततं शताधिका जना आयान्तिस्म। अत्रापि निरन्तरं कीर्तनमभूत्।

---

## स्मरणम्।

ले०—श्रीकरशास्त्री, अयोध्या।

मनोमोहावहा साऽध्ययनशाला।
निज-सौन्दर्य्य-निशातच्छुरिका-कर्तितनिखिल-जगज्जाला॥
पठ - त्तरुणतरुणीसहशिक्षण - विजयदर्प - प्रोन्नतभाला।
वर्षति यत्र सतर्षो हर्षः पीता सर्वैर्यथा हाला॥
उद्याने भ्रमति स्वच्छन्दं गायति प्रियाऽऽदत्तताला।
हावभावमूर्च्छनाऽनुकलिता नृत्यति सोल्लासं बाला॥
नवनवभावसरोजाऽभिनयन - विहिताऽधरसुरुद्धिनाला।
चक्रमर्दनं "श्रीकर" सुखयति कण्ठार्पितसुमनोमाला॥

---

## गीतिका

( रचयिता श्रीत्रियुगी नारायण पाण्डेयः )
( ध० सं० पाठशाला प्रयाग )

मम चेतोहरः समुपैति, मन्दं वायो! वहेः।
अल्पीयसी मे हृदयनदीयम्'
डगमग दोलति प्रीतिनौरियम्।
अयि पूर्वानिल! दयां कुरु'
लहरी मे मनसि समुदेति मन्दं वायो! वहेः॥१॥

[ 'मेरे आते होंगे चितचोर' इति सिनेमारागेण गीयते ]

---

# समालोचना

**सूर्यग्रहण पर वेदादिशास्त्रोंका मत**—प्रणेता—पं० श्रीदीनानाथशर्मा शास्त्री सारस्वतः, विद्याभूषणं विद्यावागीशः सनातनधर्मसंस्कृतकालेजोपाध्यायः मुलतान सिटी। प्रकाशकः—श्रीयुत मघवद्दत्तवर्मा सनातनधर्मयुवकसभामन्त्री। मूल्यं नास्ति लिखितम्।

एतन्निबन्धप्रणेतुर्नाम्ना के नाम परिचिता न सन्ति। तैरेव सनातनधर्मसिद्धान्त-समर्थनैकव्रतैः शास्त्रिमहोदयैरेषा चतुर्विंशतिपृष्ठात्मिका पुस्तिका सूर्यग्रहणावसरे स्नानदानादीनामवैदिकताम्, अशास्त्रीयताम्, अयौक्तिकतां निरर्थताञ्च समर्थयितुं केनाप्यार्यसामाजिकेन मुलताननिवासिना प्रकाशितायाः पुस्तिकायाः खण्डनाय निबद्धा। अत्र वेदशास्त्रयुक्तिप्रभृतिभिः सूर्यग्रहणादिषु क्रियमाणस्नानादीनां शास्त्रीयता साधिताऽस्ते। स्वपक्षस्थापने परपक्षखण्डने च शास्त्रिमहोदयानां कीदृशमपूर्वं पाटवमिति नास्ति तिरोहितं सूर्योदयपाठकानाम्। अस्याः पुस्तिकायाः पुनः प्रकाशनं पूर्णप्रचारञ्च कामये।

**सुभाषितपद्यरत्नाकरः**—चतुर्थो भागः। गुर्जरभाषानुवादसहितः। संग्राहकोऽनुवादकश्च मुनिराजश्रीविशालविजयजीमहाराजः। प्राप्तिस्थानम्—मंत्री श्रीविजयधर्म सूरि जैनग्रन्थमाला, छोटा सराफा, उज्जैन। मूल्यम्—सपादरूप्यकम्।

अस्य पुस्तकस्य विषयो नाम्नैव प्रकटीभवति। त्रिशताधिकपृष्ठात्मकेऽस्मिन् पुस्तके विद्वज्जनोपयोगिनां धर्म-समाज-व्यवहार-नीतिप्रभृतिनानाविषयसम्बन्धिनां पद्यानां संग्रहो वर्तते। सुभाषितरसास्वादलोलुपानां कृते सर्वथा संग्राह्यमस्ति पुस्तक-मिदम्। मुद्रणं कागदादिकञ्च स्वच्छं सुमनोहरञ्चास्ति।

**रोगविज्ञानम्**—सचित्रम्, प्रथमो भागः। रचयितारः टिप्पणीकर्तारश्च—आयुर्वेदाचार्याः श्रीकविराजसुरेन्द्रकुमारशर्माणो विविधोपाधिभूषिता आयुर्वेद-जगति कतिपयनवाविष्कारकर्तारश्च। प्रकाशिका—पण्डिता सरोजनीदेवी वैद्या, चायल्ड वेलफेयर एण्ड मेटर्नटी सेन्टर, चिडावा—जयपुर स्टेट। मूल्यं सार्धरूप्यकद्वयम्।

व्याधिविनिश्चयार्थोऽयं नव्यनिदानग्रन्थः १९६ पृष्ठेषु षोडशसु चाध्यायेषु समाप्तिं गतः श्लोकसंख्याऽत्र भूयसी वर्तते। स्वास्थ्यमहिमा, व्याधिनिर्णयः, ज्वर-निदानम्, यकृत्प्लीहारोगाश्चेति पुस्तकस्यास्य बहवो विषयाः। परन्तु मुद्रणकाग-दादिसर्वविधसौन्दर्यसमन्वितमपीदं पुस्तकमशुद्धिबाहुल्यादतीव दुःखाकरोति चेतः। आदौ लेखकेनैव—इयं प्रथमा प्रवृत्तिः, सुलभा अत्र बहवः प्रमादा इत्याशयं प्रकटीकृत्य स्वकीयो दोषः स्वीकृतः। यथा तेषामेष लेखः—"तथा च नवीनसरणौ प्रवृत्तस्य वा शीघ्रत्वात् मे प्रमादा वा सुलभा वा मुद्रणत्रुष्यान् स करुणमुपेक्ष्य दोषान् सफलतां नेयो मे श्रमः अन्यच्च "इति प्रोक्तं मयाऽत्र पाश्चात्य-दर्शनात्। क्षमध्वं संतः मे ऽपराधः नूतनविषयसन्नितम्"। इयमेव भाषा समस्त-स्यापि ग्रन्थस्य।

**सापिण्ड्यभास्करः**—विद्वद्वरघुले इत्युपाह्व श्रीकृष्णशास्त्रिविरचितः। प्रकाशकः-श्रीमाधवशर्मा एम० ए० बी० एल० महोदयः। प्राप्तिस्थानम्—माधवमुद्रणालयः नागपुर सिटी। मूल्यम्—द्वादश आणकाः। षष्ठिः पृष्ठसंख्या।

भास्करदेववदयमपि सापिण्ड्यभास्करः सप्तरश्मिमयो विद्यते। मङ्गलश्लोकाद्य-नन्तरं सप्तसु रश्मिषु सप्त विषया विचारिताः सन्ति। यथा—सापिण्ड्यशब्दार्थ-विचारः, मातुलकन्यापरिणयनविचारः, सापिण्ड्यावधिविचारः, मातृगोत्रविचारः, दत्तकसापिण्ड्यविचारः, संग्रहश्लोकाः पितृतर्पणञ्चेति। उपर्युक्तविषयजिज्ञासुजनेभ्यः परमोपयोगि पुस्तकमिदम्।

**लोकमान्यालङ्कारः**—ग्रन्थकर्त्ता—पण्डित गजानन रामचन्द्र करमलकरशास्त्री काव्यसांख्यतीर्थः, इन्दोरस्थ श्रीहोलकरसंस्कृतमहाविद्यालयाध्यापकः। मूल्यम्—द्वादश आणकाः। पृष्ठसंख्या ६४। मुद्रणादिकं शोभनम्।

अस्मिन् पुस्तके कुवलयानन्दकारिकायाः सोदाहरणानि शताऽलङ्कारलक्षणानि प्रकाशितानि सन्ति। वैशिष्ट्यमेतावद्वर्तते यत् सर्वेषामपि अलङ्काराणां कुवलयानन्द-कारिकास्थलक्षणोदाहरणे प्रदर्श्य तदधस्तात् विविधवृत्तमयानि नवीनान्युदाहरणानि अपि दत्तानि यानि लोकमान्यश्रीतिलकमहोदयचरित्रवर्णनपराणि सन्ति। अतोऽस्य यथानाम तथा गुणः, आरम्भे लोकनायक-प्रसिद्धनेतृप्रवर-श्रीमाधव श्रीहरि अणे-महोदयलिखिता महाराष्ट्रभाषायां प्रस्तावनापि वर्तते। एतत्पुस्तकपठनेनालङ्कारज्ञानेन सहैव तिलकजीवनचरित्रमपि ज्ञातं भविष्यतीति छात्राणां द्विविधलाभसम्पादनं पुस्तकप्रणेतुरुद्देश्यमिति तैर्लिखितम्। वयमपि मतमेनदनुमोदामहे।

उच्छृङ्खलम्—हास्यरसस्यैकलं पाक्षिकं पत्रम्। सचित्रञ्च। सम्पादकः—श्रीसिद्धलिङ्गस्तैलङ्गः। वार्षिकं मूल्यं रूप्यकमेकम्। प्राप्तिस्थानम्—उच्छृङ्खल, बनारस सिटी।

"अत्र हास्यरसस्यैव लेख कविता वा प्रकाश्येत" इति पत्रस्यास्य नियमः। अन्यभाषासु अनेका हास्यरसप्रधानाः पत्रिकाश्चलन्ति। हिन्दीभाषायां काशीत एव तरङ्ग, खुदाकी राह पर, इत्यादिपत्रिका निस्सरन्ति। परं संस्कृते भारतवर्षमात्रेऽपि न हास्यरसमयी काचन पत्रिकाऽऽसीत्। सेयं महती त्रुटिरुच्छृङ्खलेन पूर्तिं नीतेति संस्कृतसमाजस्य महत्सौभाग्यम्! अस्य संचालक-प्रबन्धकेभ्यो धन्यवादा दीयन्ते। परं हास्यरसप्रधानेयं पत्रिका बीभत्सरसव्यभिचारिणी न भूयादिति नोऽनुरोधः।

—द्विवेदी साहित्याचार्यः।

---

## सामयिकसमाचाराः।

### सनातनधर्मसम्मेलनम्।

धर्मप्राण-प्रजावत्सल-श्रीमन्मरुधराधीशानां श्रीयोधपुरनरेशानां छत्रच्छायायां सानन्दं सञ्चाल्यमानायाः श्रीमारवाड प्रान्तीय-सनातनधर्मसभायाः पञ्चमं महाधिवेशनं योधपुरनगरे दिसम्बरमासस्यान्तिमे सप्ताहे दिनत्रयं सुमहत्समारोहेण सह सम्पन्नतामगात्। सभापतिपदं म. म. पं० श्रीगिरिधरशर्मचतुर्वेदमहोदयैरलङ्कृतमासीत्। धर्मोपदेशकेषु वैदिकविज्ञानकेशरिश्रीमोतीलालशास्त्रिणो जयपुरीयाः, व्याकरणाचार्याः श्रीवृद्धिचन्द्रशास्त्रिणः, व्याख्यानवाचस्पतयः श्रीरामदेवजी चोमालमहोदयाः, पञ्जाबकेशरि स्वामि श्रीस्वतन्त्रानन्दजी महाराजाः, श्रीरामचन्द्रशर्माणः कीर्तनकलानिधयः, साहित्याचार्याः श्रीपुरुषोत्तमशास्त्रिणः, शास्त्रार्थमहारथि श्रीश्रीकृष्णशास्त्रिणश्च समुपस्थाय स्वैःस्वैर्दुष्यपूर्णव्याख्यानैः सम्मेलनस्य शोभां सुतरामवर्धयन्। संस्कृतशिक्षाप्रचार-गोरक्षणप्रभृतिविषयेषु प्रस्तावा अभूवन् स्वीकृताश्च।

### अ० भा० हिन्दीसाहित्यसम्मेलनम्।

प्रयागविश्वविद्यालयकुलपतीनां श्रीमद्-अमरनाथझामहोदयानां सभापतित्वे हिन्दीसाहित्यसेवाया एकस्मिन् मुख्यतमे क्षेत्रे पञ्चनदप्रान्तीये अबोहरनाम्नि नगरे अखिलभारतीयहिन्दीसाहित्यसम्मेलनस्य चतुर्दशं वार्षिक महाधिवेशनं गतदिसम्बरमासस्य अन्तिमे सप्ताहे यशस्वितया सह सुसम्पन्नमभूत्। अन्यान्यपि दर्शनपरिषद्,

समाजशास्त्रपरिषद् ,कविसम्मेलनञ्चेत्यादीनि कतिचित्,सम्मेलनानि अभूवन्। सभापति श्रीझामहोदयैर्निजवक्तृतायां हिन्दीसाहित्यसम्बन्धिनां हिन्दीभाषासम्बन्धिनां च सर्वेषां प्रश्नानां चर्चा कृता समुचितं च समाधानं विहितम्। वैज्ञानिक शब्दनिर्माण-समस्यामादाय तैः सम्मतिर्दत्ता।

## काशी हिन्दुविश्वविद्यालयस्य रजतजयन्ती-महोत्सवः।

जनवरीमासस्य २० तारिकायां हिन्दु विश्वविद्यालयस्य रजनजयन्ती-महोत्सवः श्रीदरभङ्गानरेशानामध्यक्षतायां सुसम्पन्नतामगात्। अस्मिन् महोत्सवे महात्मा-गान्धी, पं० जवाहरलाल नेहरू, डा० राजेन्द्रप्रसाद इत्यादयो नेतारः, अनेके भारत-प्रसिद्धा विद्वांसो महाराजाश्च कतिपये सम्मिलिता आसन्। प्रधानं भाषणं श्रीमतां गान्धिमहोदयानामासीत्। आदौ श्रीमन्मालवीयमहोदयानां महतः परिश्रमस्य प्रशंसां विधाय श्रीगान्धिमहोदयेन विश्वविद्यालयीयानां केषादोषाणामुपरि सञ्चालकानां ध्यानमाकृष्टम्। प्रधानतया मातृभाषां राष्ट्रभाषाञ्चोपेक्ष्य आङ्गलभाषयैव सर्वकार्य-व्यवहारमवलोक्य दुःखितैस्तैर्निजे भाषणेऽभ्यधायि—"मैं सोचता था कि यहाँ कुछ हिन्दुस्तानीमें सुनेगें। हिन्दुस्तानीमें नहीं तो हिन्दीमें या उर्दूमें, वह भी नहीं तो संस्कृतके ही कुछ सुनूगा। पर ऐसा कुछ सुननेको नहीं मिला। इत्यादि।

अस्मिन्नवसरे प्राच्यविद्याविभागाय मिथिलाधिपति श्रीदरभङ्गानरेशमहोदयैः श्रीबलदेवदासविड़लामहोदयैश्च एकैकलक्षरूप्यकाणां दानमकारि। अन्यैरपि कैश्चिद् राजभिर्विश्वविद्यालयस्य कृते दानरूपेण लक्षाधिकानि रूप्यकाणि समर्पितानि। उत्सवेऽस्मिन्ननेके दिगन्तगतकीर्तयो विद्वांसो विश्वविद्यालयेन "डाक्टर" इति-पदवीप्रदानेन सम्मानिताः।

---

## गङ्गोपनिषत्।

(प्राप्तिस्थानम्—श्रीधर्मनाथझा, १९ रानीकोठा मीरघाट काशी।)

वाराणसीवास्तव्येन श्रोत्रियवंशावतंसेन मैथिलब्राह्मणवरेण मीमांसकभूषणेन श्रीमता विद्वद्वरेण झोपाह्वमेधानाथशर्मणा संकलिता लक्ष्मीस्तोत्रसमन्विता गङ्गोपनि-षदियं अवश्यमुपादेया लक्ष्मीकृपाकाङ्क्षिभिर्जाह्नव्याः परमभक्तैश्च। पुस्तकमिदं बिना मूल्यं उपरितनसंकेतेन लभ्यते।

---

# मानवधर्मसारः ।*

डा० श्रीभगवानदास विनिर्मितः । मूल्यम् ॥) प्राप्तिस्थानम्, श्रीकाशी विद्यापीठ, बनारस। ग्रन्थोऽयं संग्रहात्मको विद्यते । तत्र 'कर्मणा वर्णः' इत्येतस्यसमुपोद्बलकानां वाक्यानां वेदपुराणधर्मशास्त्रादिभ्यः सर्वेभ्योऽपि संस्कृतशास्त्रेभ्योऽर्थतो वाक्यतश्च संग्रहो विद्यते। तत्रान्यत उद्धृतपद्यानामग्रे तत्तद्ग्रन्थनामसङ्केतोऽस्ति। उद्धरणचिह्नमपि विद्यते ।

अत्र ग्रन्थे बहवो विषया विचारणीया उपनिबद्धाः सन्ति। यथा 'हिन्दूनां क्षयरोगः' 'ह्रासकारणान्वेषणम्' 'कथं चिकित्सा' 'वर्तमाना शास्त्रदुर्दशा' कर्मणा वर्णः; 'पुराणोदाहरणानि' 'जन्मवर्णाग्रहस्य दारुणः परिणामः' 'धर्मशास्त्रदुर्दशा' 'सत्यः सनातनो धर्मः' 'रूपकाणि' 'सर्वमानवसंग्रहः' हिन्दुसमाजस्य पुनः संस्करणम् इत्यादयो बहवो द्रष्टव्या विषयाः सन्ति। सर्वोपरि वैचित्र्यमेतद्विद्यते यद् ग्रन्थकृता स्वयमपि स्वीयमतस्योल्लेखः सप्रमाणयुक्तिकः कृतोऽस्ति। येन पुस्तकपठितुर्ग्रन्थप्रतिपाद्यस्य विषयस्यावगतिः स्फुटैव जायते। सम्प्रति भारते विविधानां मतानां प्रचारो दृश्यते। केचन सर्वमपि विहाय स्वातन्त्र्यवादं स्वीकुर्वन्ति। केचित्तु सर्वं विनाश्य नूतनमेव कञ्चन प्रकारं कामयन्ते। सत्येवं व्यतिकरे अस्मिन् पुस्तके सर्वशास्त्राणां प्रामाणिकानि वचनानि संगृह्य भारतीयसमाजव्यवस्थानाम्ना कर्मणा वर्णस्य सिद्धान्तः प्राधान्येन प्रतिपादितो विद्यते। अस्मिन्नेव प्रसङ्गे पुराणोय गूढविषयकाणां रूपकाणामपि स्फुटार्थता प्रतिपादिता विद्यते। हिन्दूनां क्षयकारणस्य इतिहासविषकोऽपि विचारो विशेषतो विवृतो विद्यते। येनास्मिन्भारतेऽन्यासां जातीनां प्रवेशस्य तद्विस्तारस्य चामूलतो ज्ञानं जायते। हिन्दुसमाजस्य पुनःसंस्करणप्रकारोऽपि निर्दिष्टो विद्यते। वर्णभेदस्याश्रमभेदस्य च निदानं निर्दिष्टमस्ति। अध्यात्मशास्त्रावश्यकतायाः सर्वप्राधान्यप्रतिष्ठापनं विद्यते। मया तु साद्यन्तमिदं पुस्तकं मनोयोगेन पठितम्। मद्दृष्टौ पुस्तकमिदमुपादेयं विद्यते। अन्यच्च दार्शनिकदृष्ट्या सर्वेषामेव सामाजिकानां विषयाणामेवमेकत्रोपन्यासो दुर्लभ इदानीं विद्यते। वेदपुराणेतिहासार्थानां नवीनपद्धत्या पर्य्यवेक्षणमस्मात्पुस्तकात्साधु प्राप्यते। किं बहुना जन्मवर्णव्यवस्थायां कर्मवर्णव्यवस्थायाञ्च के दोषगुणाः सन्तोति विवेचकैरवलोकनीयमिदं पुस्तकम्। प्रतियोगिविधयाऽनुयोगिविधया वा एकदाऽवश्यं द्रष्टव्योऽयं ग्रन्थ

---

* पण्डित श्रीदीनानाथशर्मशास्त्रि विद्यावागीशमहोदयैः विहिता समालोचना, सूर्योदयस्य-षोडशवर्षीय १०-११ अङ्के प्रकाशितास्ति, सा पाठकैः पठिता पठनीया च—सं० ।

इत्येव मे सत्परामर्शः । मुद्रणमपि शोभनमस्ति भाषापि मञ्जुला सरला सन्धि-विच्छेदवती विद्यते । विद्यार्थिनः पिपाठयिषयैव मन्ये 'यतिः सर्वत्र पादान्ते, श्लोकार्द्धे तु विशेषतः' इति नियमस्य ग्रन्थकृतोपेक्षा कृतास्ति । व्याकृतिनियमभङ्गे तु तेन स्वयं निवेदितं दृश्यते ।

'नापाणिन्यादयोऽर्वाञ्चः प्राञ्च एव तु सेविताः' इत्यादि—सम्प्रति संस्कृतभाषायां नवीनविषयकग्रन्थानां निर्माणाय सामान्याभाव एव दृश्यते । तत्रैव सुरभाषायां डाक्टर महोदयेन ग्रन्थोऽयं लिखित इति संस्कृतज्ञानां धन्यवादास्पदीभूतास्ते । संस्कृतभाषायाः सम्प्रत्यपि सर्वार्य्यगम्यत्वं तैः प्रमाणितमिति तदुक्तिरेवोद्ध्रियते "सर्वप्रान्तेषु यन्नैकं प्राकृतं प्रतिबुध्यते । संस्कृतं बुध्यते त्वार्य्यैरतो व्याह्रियतेऽत्र तत्" इति । यस्य मनोर्वचनानि साम्प्रतिका उच्छृंखलाः सुधारका उपहसन्ति, बहवस्तु ब्राह्मणानां ग्रन्थोऽयम् इति कृत्वा दग्धुमेव प्रवृत्ताः सन्ति । तस्यैव भगवतो मनोर्माहात्म्यम् कीदृशमस्मिन् ग्रन्थे वर्णितमस्ति समालोचकः—कश्चिद्विद्वद्धौरेयः ।

## श्रीआर्य्यमहिलामहाविद्यालयस्य नवमो वार्षिकोत्सवः ।

महाविद्यालयोऽयं सम्प्रति आर्य्यमहिलासु धार्मिकशिक्षा-प्रचारस्याद्वितीयं केन्द्रं विद्यते । अत्रहि हिन्दुसंस्कृतिसमेधकानां सनातनधर्मसंरक्षकाणामेव विषयाणां शिक्षा प्रदीयते । विद्यालयेन सहैव धर्मसेविकाविद्यापीठनामकमपि धार्मिकमेकं शिक्षाकेन्द्रं प्रचलति । यत्रार्यविधवा धर्मसेविकारूपतो धार्मिकीं शिक्षां गृह्णन्ति । अस्तु, अस्मिन् अब्दे फ्रेवुअरीमासस्य पञ्चविंशतितारिकात आरभ्य सप्तविंशतितारिकां यावत् दिनत्रयम् आर्य्यमहिलामहाविद्यालयस्य नवमो वार्षिकोत्सवसमारम्भो महता समुत्साहेन सुसम्पन्नस्तत्र श्रीमन्तः स्वनामधन्याः नेहरुमहोदया—( कमिश्नर बनारस डिविजन ) सस्वधर्मपत्नीकाः सभापतिपदं सुशोभितवन्तः । तत्र वार्षिकविवरणपाठेन सह विद्यालयसहायकानां श्रेष्ठिनां धनिनां राज्ञां नामान्यपि पठितान्यभूवन् । तेभ्यो धन्यवादप्रदानानान्तरम् तत्रत्यशिक्षार्थिनीभिर्बालिकाभिरभिनीतं 'पार्वतीपरीक्षा' 'सीतानाटका' दिकमल्पकायमभिनयं दृष्ट्वा सर्वेषामेव द्रष्टृणां महानानन्दसन्दोहः समजनि । बालिकाभि र्निर्मितानि शिल्पकलावस्तूनि तु दर्शकानां मनोहराणि आसन् । यैश्च परितुष्टाः सभापतिमहोदया विद्यालयस्य भूरि प्रशंसां कृतवन्तः । विद्यालयोऽयं दैनन्दिनमभ्युदयमियादिति सर्वेऽपि दर्शका अभिनन्दितवन्तः । "ए० आर० पी० की ट्रेनिङ्ग कथनोपकथनं" बालिकानां परमसुन्दरं स्वाभाविकं रमणीयमासीत् । पार्वतीपरीक्षा नामकस्याभिनयस्य संस्कृतभाषामयस्य दृश्यमतीव रमणीयमासीत् । बालिकानां मुखात्तादृशं स्पष्टं शुद्धं सुस्वरमुच्चारणं श्रुत्वा तासामभिनयञ्च दृष्ट्वा सर्वेऽपि दर्शकाश्चमत्कृता आसन् । कियन्तश्च परितुष्टा दर्शका अभिनेत्रीभ्यो रजतस्वर्णपदकान्यपि दत्तवन्तः । सर्वथा विद्यालयोऽयं धार्मिकशिक्षा-प्रदानेनोत्तरोत्तरमभिवृद्धिमियादिति वयं श्रीविश्वनाथमभ्यर्थयामहे—सं० ।

## सूर्योदय नियमाः ।

( १ ) सूर्योदयः प्रतिपूर्णिमं प्रकाशितो भवति । ये पञ्चरूप्यकात्मकं ५) वार्षिकं साहाय्यं करिष्यन्ति ते संरक्षका भवितुमर्हन्ति । वार्षिकं मूल्यं भारते मुद्रात्रयम् ३) बहिर्भारतञ्च मुद्राषट्कम् ६) भारते विद्यार्थिभ्यः १) रूप्यकेणैकेनेदं पत्रं प्रदीयते । सर्वत्रैव अग्रिमं मूल्यं गृह्येत ।

२—धनादेशपत्र—( मनिआर्डर ) द्वारैव मूल्यप्रेषणं साधीयः । वी० पी० द्वारा प्रेषणे मूल्याद्धिकम् आणकषट्कं ।=) पत्रग्राहकाणां लगिष्यति ।

( ३ ) ग्राहकैः प्राचीनैः स्वीया ग्राहकसंख्या, नवीनैश्च 'नवीनोऽहम्' इति लेख्यमेव । अन्यथा पत्रप्रेषणे तथाऽन्यव्यवस्थाविधाने च महान् विलम्बो भवेत् । येषां समीपे समुचितसमये सूर्योदयो न गच्छेत् तैः पत्रालये ( पोस्ट आफिस ) अन्वेषणानन्तरं शीघ्रं सूचना देया । धनादेश-( मनिआर्डर ) द्वारा स्वपूर्णसंकेतं सुस्पष्टं विलिख्य सूर्योदय-मूल्यं प्रेषणीयम् । अत्र विज्ञापनदाने महीयसो लाभस्य सम्भावना । विज्ञापननियमाः पत्रं प्रेष्य ज्ञेयाः । सूर्योदये मुद्रापणीयानि निबन्धादीनि तत्सम्बन्धिलिपिः, कार्यालय-व्यवस्थाविषयकलिपिश्च "कार्याध्यक्ष सूर्योदय-कार्यालय जगत्गञ्ज, बनारसकैण्ट" इति संकेतेन प्रेषणीया ।

## लेखका विनिवेद्यन्ते ।

१—त एव लेखा इह प्रकाश्यन्ते ये सुस्पष्टाक्षरा विरलपङ्क्तिकाः सरल-सरला भावपूर्णाश्छात्रोपयोगिनो भवन्ति । साहित्यिका धार्मिकाः सामाजिका ऐतिहासिका गवेषणासम्बन्धिनश्च प्रसादगुणगुम्फिता लेखाः प्रकाशने प्राथम्यमाश्रयन्ति । अतश्च लेखकैः लेखस्य भावसौष्ठवे मनोहरत्वे च ध्यानं देयं न तु शब्दकाठिन्यादिषु ।

२—कविताश्च स्वल्पसंख्यका भावपूर्णा अपेक्ष्यन्ते न तु विंशत्यधिकाः ।

३—असम्पूर्णलेखः 'क्रमशः' इति कृत्वा, लेखकमहोदयैर्न प्रेषणीयः, किन्तु पूर्ण एव ।

## विहारसंस्कृत एशोसियेशनपरीक्षा ।

आगामि-अप्रेलमासस्य २७ तारिकातः परीक्षा प्रारम्भो भविष्यति। तत्र निम्न-लिखितक्रमेण परीक्षासमयो निर्दिष्टोऽस्ति। प्रथमा दिनद्वयेन, मध्यमा दिनत्रयेण समाप्तिं गमिष्यति।

प्रथमा-मध्यमा च २७·४·४२ सोमवासरे प्रथमपत्र प्रातःसप्तवादनतो दशवादनं, द्वितीयप त्रिवादनतः षड्वादनं यावत्, २८, भौमवासरेऽपि तथैव मध्यमा तु २९ बुधवासरपर्यन्तम्।

शास्त्रिप्रथमखण्डपरीक्षा ३०-४-४२ गुरौ, शास्त्रिद्वितीयखण्डपरीक्षा मईमासस्य प्रथमदिवसे, आचार्यस्य प्रथमखण्डस्य मईमासीय द्वितीयदिने। द्वितीयखण्डस्य मईमासीयचतुर्थेऽह्नि सोमवासरे समाप्तिं गमिष्यति। परीक्षार्थिभिः समुचितसमये परीक्षाभवने समुपस्थातव्यम्।

सेक्रेटरी—विहार संस्कृतएशोसियेशन (पटना)।

---

## ज्यौतिषमीमांसादर्शनम्।

अस्मिन् ग्रन्थे दार्शनिकरीत्या ज्यौतिषफलानामुपपत्तिर्वर्णितास्ति। अधुना प्रचाराधिक्यार्थं मूल्यं।–) ज्यौतिषविज्ञानस्य मूल्यम् –) शनिग्रहमन्त्रभाष्यस्य –) कुण्डलीनिरीक्षणौषिभिस्तया सह रूप्यकमेकं प्रेषणोयम्। प्राप्तिस्थानम्—राजकुमारगुरु ज्यौतिषालङ्कार ज्योतिर्भूषण दैवज्ञभूषण पण्डित तारादत्त राजज्योतिषी, रियासत जुब्बला, शिमला जिला।

---

## सनातनधर्मग्रन्थाः।

सनातनधर्मस्य सुप्रसिद्ध व्याख्यातृ स्वामिदयानन्दमहाराज विरचिताः।

**धर्मविज्ञान**—ग्रन्थोऽयं सनातनधर्मस्य महत्त्वपरिचायकं विद्यते, सर्वविध धर्मज्ञानलाभाय एकमेव पुस्तकमिदं पर्याप्तमस्ति। प्रथमभागस्य मूल्यम् २)।

**गीतार्थचन्द्रिका**—अस्मिन् ग्रन्थे श्लोकानां हिन्दीभाषायाम् अर्थः गूढ़तात्पर्य-प्रदर्शनपुरस्सरं **ज्ञानकर्मोपासना**—काण्डत्रयस्य सामञ्जस्यं वर्तते। मूल्यम्—२॥) प्रेषणव्ययश्च पृथक्।

**संन्यासधर्मपद्धतिः**—अत्र संन्यासग्रहणविधिः, सं[illegible]नां भेदाः विस्तृता वर्णिताः सन्ति। साधुमहात्मनां कृते परमपयोगि पुस्तकमिदम्, मूल्यम् १) प्रेषणव्ययः पृथक्। प्राप्तिस्थानम्— सेक्रेटरी

श्रीभारतधर्ममहामण्डल, जगतगंज, बनारस।

---

Printed at the Shri Lakshmi Narayan Press, Jatanbar, Benares,
and Published by the Bharatdharma Mahamandal, Jagatganj, Benares Cantt
by Pt. A. P. Sharma.

# सूर्योदयः।

## त्रैभाषिको विशेषांकः।

# SURYODAYA

## SPECIAL TRILINGUAL EDITION

Published quarterly in the interest of national solidarity, spiritual culture, social unity, spread of national language Hindi, propagation of esoteric literature in Sanskrit, English and Hindi, religious education and sacred ideal of Brotherhood of men and Fatherhood of Almighty God

FOR

## Free Distribution

Amongst religious and educational active institutions of India and abroad, Leaders of Hindu Community, centres of the All-India Sanskrit and Spiritual University in all provinces of India, Dharmasabhas, Mahamandal Provincial Centres and all classes of members, Patrons and Supporters of Shri Bharat Dharma Mahamandal.

---

सनातनधर्मके सिद्धान्तोंका प्रचारक यह त्रैभाषिक पत्र नियमित प्रकाशित होता है। श्रीभारतधर्ममहामण्डलके संरक्षकों, सब श्रेणीके सभ्यों तथा श्रीमहामंडलके धार्मिक विश्वविद्यालय के परीक्षाकेन्द्रोंके अतिरिक्त भारतखण्डकी नियमित कार्य करनेवाली सनातनधर्मसभाओं, शिक्षा सम्बन्धी संस्थाओं तथा अन्य सब धर्मावलम्बियोंकी स्वदेशीय और विदेशीय संस्थाओंको जो सत्यके अनुसन्धानमें रत हों उन्हें यह पत्र बिना मूल्य वितरण किया जाता है।

---

MARCH, 1942.

PUBLISHED BY

SRI BHARAT DHARMA MAHAMANDAL

*Head Office—Benares.*

# SHRI BHARAT DHARMA MAHAMANDAL

All-India Socio-Religious Association of the Sanatanists, Recognised by the Imperial and Provincial Governments, Hindu Ruling Princes, All Religious Heads and All Hindu Communities. *Patrons:*—Their Holinesses of Shringeri, Jyotir-Math, Totadri, Nathdwara, Dwarka, and other religious heads, and Their Highnesses of Udaipur, Nepal, Kashmir, Baroda, Jodhpur, Gwalior, Jaipur, Tikamgarh, Kotah, Alwar, Patiala, Datia, Jamnagar, Dhrangadhra, Tripura, Panna, Dholpur, Indore, Ratlam, Faridkote, Ajaigarh, Keonthal, Nahan, Rewa, Bundi, Dhar, Manipur, Dungarpur, Danta, Narsingarh, Kishangarh, Limbdi, Wadhwan, Porbandar, Dharampur, Palitana, Morvi, Mandi, Bijawar, Wankaner, Parlakimedi, Balrampur and other Hindu Princes. *General President:*—H. H. the Hon'ble Maharajadhiraj, Darbhanga. *Vice General President:*—The Hon'ble Dharmalankar Sir Manmathanath Mukherji Mahashaya, Kt., Retired Chief Justice of Bengal, Calcutta. *Chancellor of the University:*—H. H. Maharaja Bahadur of Dewas J. B. Among other High Office-Bearers are their Highnesses of Tehri, Banswara, Sailana. *Pradhan Sachiva*—Maharaj Sahib of Multhan. *Head-Quarters:—Benares.* Provincial Centres in all Provinces of India and Affiliated Institutions, Branches and Examining Centres of the University all over the country. **Membership:**—Open to all Hindus of all Grades. Members are required to pay annual subscription of Re. 1/- only. They will receive this Trilingual quarterly Magazine free and other advantages.

---

## विषय-सूची ।

*Contents of Trilingual Suryodaya, March, 1942*

# सूर्योदयः ।

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जड़वाद-कैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

## त्रैभाषिको विशेषाङ्कः ।



| सप्तदशे वर्षे १७ | फाल्गुनपूर्णिमायाः १९९८<br>मार्च १९४२ | ६ संख्या |
|---|---|---|



# सनातनधर्मो वर्णाश्रमधर्मश्च ।

सनातनधर्मवर्णाश्रमधर्मयोः परिचायके लक्षणे मौलिकं महत् पार्थक्यमास्ते । एतत्प्रभेदज्ञानसम्पादनात् पूर्वं धर्मस्य सार्वभौमस्वरूपबोधनं नितान्तमावश्यकम् । धर्मस्य जगद्धारकं सार्वभौमं स्वरूपमधोनिर्दिष्टः श्रौतः स्मार्त्तश्च प्रमाणपुञ्जः सम्यग् निबोधयति । यथा—"धर्मो लोकस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति, धर्मेण पापमपनुदति, धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति (श्रुतिः) धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः, यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः(महाभारते) या बिभर्त्ति जगत् सर्वमीश्वरेच्छा ह्यलौकिकी । सैव धर्मो हि सुभगे नेह कश्चन संशयः । उन्नतिं निखिला जीवा धर्मेणैव क्रमादिह । विदधानाः सावधाना लभन्तेऽन्ते परम्पदम् । (पुराणसंहितायाम्) धारको धर्मः ॥ २ ॥ अभ्युदयकरः सत्त्वप्राधान्यात् ॥ ३ ॥ निःश्रेयसकरः शक्तिमत्त्वात् ॥ ४ ॥ प्रतीपकर्माऽधर्मः ॥ ५ ॥ समौ शक्तिवैशिष्ट्यात् ॥६॥ अहितत्वाद्धेयः ॥७॥ धर्माधर्मनिर्णयः सत्त्वतमोभ्यां ॥ ८ ॥ (कर्ममीमांसा, धर्मपादः)

ऊर्द्ध्वमुल्लिखितश्रौतस्मार्त्तवचोभिरेतन्निष्पद्यते यत्, या भगवदीया शक्तिः परमाणुमारभ्य ब्रह्माण्डपर्यन्तमखिलं विश्वं बिभर्त्ति निरवच्छिन्नं निर्बाधं यथानियमं परिचालयति च या च भगवतः शक्तिश्चतुर्विधभूतसङ्घं चतुरशीतिलक्षयोनिषु सर्वथाग्रे समुन्नयन्ती पूर्णाङ्गमनुष्ययोनिं प्रापयति, मनुष्येषु यथाक्रममुन्नतिं विदधानाऽभ्युदयं निःश्रेयसञ्च प्रतिपादयति सैव जगद्धारिका जगन्नियामिका महाशक्तिर्धर्मनाम्ना व्यपदिश्यते। एतदेव धर्मस्य सार्वभौमत्वम्। द्वितीयतो या शक्तिर्मानवानां सर्वविधधार्मिकमतमतान्तरेषु सर्वव्यापकत्वेनानुस्यूता समस्तमानवजातिं निखिलधर्मसिद्धान्तराशिं च निर्विशेषमुपकरोति, एष एव साधारणो धर्मः सनातनधर्माख्यया व्यवह्रियते। सनातनधर्मस्य प्रधानानि त्रिंशल्लक्षणानि श्रीमद्भागवतमहापुराणे इत्थमभिहितानि—

"सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम्॥
सन्तोषः समदृक् सेवा ग्राम्येहोपरमः शनैः।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम्॥
अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः।
तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव!॥
श्रवणं कीर्त्तनं चास्य स्मरणं महतां गतेः।
सेवेज्याऽवनतिर्दास्यं सख्यमात्मसमर्पणम्॥
नृणामयं परो धर्मः सर्वेषां समुदाहृतः।
त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यति॥

सर्वोपनिषत्सारभूतायां श्रीभगवद्गीतायामपि भगवता श्रीकृष्णेन साधारणधर्ममभिलक्ष्यैवं प्रतिपादितम्, यथा—

"यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥

एत एव त्रयः साधारणधर्माः श्रीशक्तिगीतायां व्यासतो व्याख्याता यथा—

अहमेवास्मि भो देवाः! धर्मकल्पद्रुमस्य च।
बीजं मूलं तथाऽऽधारो नात्र कश्चन संशयः॥
स्कन्धस्तस्य द्रुमस्यास्ते धर्मो वै विश्वधारकः।
मुख्यं शाखात्रयञ्चास्य यज्ञो दानं तपस्तथा॥

ब्रह्मार्थोऽभयदानानि देवाः! त्रैगुण्ययोगतः।
दानस्य प्रतिशाखाः स्युर्नवधा नात्र संशयः॥
तपोऽपि त्रिविधं ज्ञेयं कायवाणीमनोभवम्।
त्रैगुण्ययोगेनास्यापि प्रतिशाखा नवासते॥
प्रतिशाखा अनेकाः स्युर्यज्ञशाखासमुद्भवाः।
काम्याध्यात्माधिदैवाधिभूतनैमित्तनित्यकाः॥
कर्मयज्ञप्रशाखाया भेदास्त्रैगुण्ययोगतः।
त एवाष्टादशास्या हि प्रतिशाखा मनोहराः॥
पितृदेवर्षिवृन्दानामवतारगणस्य च।
पञ्चानां सगुणब्रह्म-रूपाणां निर्गुणस्य च॥
ब्रह्मणश्चासुरौघाणामुपास्तेः पञ्च भक्तितः।
मन्त्रो हठो लयो राज एते योगेन च ध्रुवम्॥
अस्या भेदाश्च चत्वारो भेदा एवं नवासते।
एते भेदा नवैवाहो देवाः! त्रैगुण्ययोगतः॥
उपास्तेः प्रतिशाखाः स्युः सङ्ख्यया सप्तविंशतिः।
श्रवणं मननञ्चैव निदिध्यासनमेव च॥
त्रयोऽमी ज्ञानयज्ञस्य भेदास्त्रैगुण्ययोगतः।
नवधा संविभक्ता हि प्रतिशाखा नवासते॥
द्विसप्तत्या प्रशाखाभिः शाखाभिश्चैवमेव भोः।
निजानां ज्ञानिभक्तानां धर्मकल्पद्रुमात्मना॥
विराजे स्वान्तदेशेऽहं निर्ज्जराः! नात्र संशयः।
धर्मकल्पद्रुमस्यास्य पत्रपुष्पात्मकान्यहो॥
उपाङ्गानि न सङ्ख्यातुमर्हाणि कैरपि क्वचित्।
विचित्राणि मनोज्ञानि सन्ति तानि ध्रुवं सुराः!॥
पक्षिणौ द्वौ सदा तत्र जगतां मोहकारिणौ।
मनोज्ञे वृक्षराजे स्तो वसन्तौ शाश्वतीः समाः॥
स्वादतेऽभ्युदयस्यैको ह्यपक्वे द्वे फले तयोः।
अपरश्चतुरः पक्षी सुपक्वं त्वमृतं फलम्॥
सुस्वादास्वाद्य गीर्वाणाः! नूनं निःश्रेयसं पदम्।
ब्रह्मानन्दसमुल्लास-सार्थकत्वं प्रकाशयेत्।

इमे सर्व एव साधारणधर्माः सनातनधर्मेऽन्तर्भवन्ति, सर्व एवैते सर्वजीव-कल्याणकारित्वात् सार्वजनीना वर्त्तन्ते। किञ्च, वर्णाश्रमधर्मस्तु किञ्चिद्वैशिष्ट्य-मावहते। अयं किल वर्णाश्रमधर्मो भरतखण्ड-( हिन्दुस्थान ) निवासिन्या हिन्दु-जातेरेव एकमात्रं विशिष्टो धर्मः। वर्णाश्रमधर्मः चतुर्भिः सुदृढैर्दुर्गैरभितः सुरक्षित आस्ते। तत्र प्रथमो वर्णधर्मः, द्वितीयः आचारविचारधर्मः तृतीय आश्रमधर्मः,तुरीयो नारीधर्मश्च। चतुर्णामेषां बाहुल्येन वर्णनं वेदशास्त्रेषु समधिकमुपलभ्यते, यथा—

श्रीमद्भागवतमहापुराणे सप्तमे स्कन्धे एकादशाध्याये सनातनधर्मवर्णाश्रम-धर्मयोः पार्थक्यं प्रतिपादयता भगवता वेदव्यासेन त्रिंशल्लक्षणोपेतं सनातनधर्मं व्याख्याय वर्णाश्रमधर्मो विशदमुट्टङ्कितः—

"संस्कारा यत्राविच्छिन्नाः स द्विजोऽजो जगाद यम्।<br>
इज्याध्ययनदानानि विहितानि द्विजन्मनाम्॥<br>
जन्मकर्मावदातानां क्रियाश्चाश्रमचोदिताः।<br>
विप्रस्याध्ययनादीनि षडन्यस्याप्रतिग्रहः॥

राज्ञो वृत्तिः प्रजागोप्तुरविप्राद् वा करादिभिः।<br>
वैश्यस्तु वार्त्तावृत्तिश्च नित्यं ब्रह्मकुलानुगः॥<br>
शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत्।<br>
वृत्त्या स्वभावकृतया वर्त्तमानः स्वकर्मकृत्॥<br>
हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात्।

वर्णधर्मविमर्शो यथा श्रीभगवद्गीतायामष्टादशाध्यायेऽपि—

"ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप!।<br>
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥<br>
शमो दमः तपः शौचं क्षान्तिरार्जवमेव च।<br>
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥<br>
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।<br>
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्॥<br>
कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम्।<br>
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्॥<br>
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।<br>
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु॥<br>
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।

स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥

मनुरप्याह—

अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥
प्रजानां रक्षणं दानमिज्याध्ययनमेव च ।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥
पशूनां रक्षणं दानमिज्याध्ययनमेव च ।
वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥
एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् ।
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥

वर्णाश्रमधर्मरक्षकदुर्गस्य सदाचारस्य महत्त्वं मनुर्मनुते, यथा—

"आचारः प्रथमो धर्मः श्रुत्युक्तः स्मार्त्त एव च ।
तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः ॥
आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ।
आचाराल्लभते कीर्त्तिं पुरुषः प्रेत्य चेह च ॥
सर्वलक्षणहीनोऽपि यः सदाचारवान् भवेत् ।
श्रद्दधानोऽनुसूयश्च शतं वर्षाणि जीवति ॥
अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥

ब्रह्मचर्यगार्हस्थ्यवानप्रस्थसंन्यासाभिधानस्याश्रमचतुष्टयस्य प्रशंसनं श्रुतयः स्मृतयश्च सम्यक् प्रकुर्वन्ति । तत्र ब्रह्मचर्यमहिमा यथा मुण्डकोपनिषदि—

"सत्येन लभ्यस्तपसा ह्येष आत्मा ।
सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ॥"

छान्दोग्येऽपि—"अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येवेष्ट्वात्मानमनुविन्दते ।"

श्रीभगवद्गीतायामपि—"यदक्षरं वेदविदो वदन्ति, विशन्ति यद्यतयो वीतरागाः । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥"

योगदर्शनेऽपि—"ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ।"

जाबालश्रुतौ चतुर्णामाश्रमाणां क्रमनिरूपणम्, यथा—"ब्रह्मचर्यं परिसमाप्य गृही भवेत्। गृही भूत्वा वनी भवेत्। वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा। यदहरेव विरजेत्तदहरेव प्रव्रजेत्॥"

गार्हस्थ्ये मनुः—

"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्॥
गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्॥
यथा वायुं समाश्रित्य जीवन्ति सर्वजन्तवः।
तथा गृहस्थमाश्रित्य जीवन्ति सर्व आश्रमाः॥

गृहस्थेन पञ्च महायज्ञा नूनं करणीया यथाह मनुः—

पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः।
एतैः पञ्च महायज्ञा ब्रह्मयज्ञादिनामकैः॥ (शब्दकल्प०)
पञ्चैतान् यो महायज्ञान्न हापयति शक्तितः।
स गृहेऽपि वसन्नित्यं सूना दोषैर्न लिप्यते॥
देवतातिथिभृत्यानां पितृणामात्मनश्च यः।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति॥

श्रुतिरप्याह—"प्रजातन्तुं मा व्यवच्छेत्सीः।"

वानप्रस्थाश्रमधर्मो मनुस्मृतौ वर्णितो यथा—

"एवं गृहाश्रमे स्थित्वा विधिवत् स्नातको द्विजः।
वने वसेत्तु नियतो यथावद्विजितेन्द्रियः॥
गृहस्थस्तु यदा पश्येद् वलीपलितमात्मनः।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत्॥
सन्त्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम्।
पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत् सहैव वा॥"

यथावद् वानप्रस्थधर्ममनुपालयतां का गतिरिति व्याचष्टे छान्दोग्य-श्रुतिर्यथा—

"तपःश्रद्धे ये उपवसन्त्यरण्ये, शान्ता विद्वांसो भैक्षचर्यां चरन्तः। सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा।"

वनेषु तु विहृत्यैवं तृतीयं भागमायुषः।
चतुर्थमायुषो भागं त्यक्त्वा संगान् परिव्रजेत् ॥
आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः।
भिक्षाबलिपरिश्रान्तः प्रव्रजन् प्रेत्य वर्द्धते ॥

इति समासतो महर्षिमनुना सन्न्यासाश्रमसंबन्धेऽभिहितम्। संन्यासगीतायामपि चतुराश्रमधर्मौ निरूपितो यथा—

आश्रमाणां चतुर्णां वै प्रधानो धर्म उच्यते।
संयमस्तु गृहस्थानां नियमो ब्रह्मचारिणाम् ॥
वानप्रस्थाश्रमस्थानां तपस्त्यागस्तु न्यासिनाम्।

व्यासतः सन्न्यासगीतायां सन्न्यासपद्धतौ च संगृहीतोऽयं विषयस्तत्रैव द्रष्टव्यः।

श्रुतिरपि सन्न्यासधर्मं पुष्णाति, यथा—

"न कर्मणा न प्रजया धनेन त्यागेनैकेनामृतत्वमानशुः।"

चतुर्थदुर्गं नारीधर्मं श्रुतिर्विवृणोति, यथा अथर्ववेदे १८, ३, १ तमे "इयं नारी पतिलोकं वृणाना निपद्यत उपत्वा मर्त्य प्रेतम्। धर्मं पुराणमनुपालयन्ती तस्मै प्रजां द्रविणं चेह धेहि।"

मनुसंहितायाः पञ्चमाध्याये च—

"नास्ति स्त्रीणां पृथग्यज्ञो व्रतं नाप्युपोषितम्।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥
सुप्ते पत्यौ च या शेते पूर्वमेव प्रबुध्यते।
नान्यं कामयते चित्ते सा विज्ञेया पतिव्रता।"
नारी भर्त्तारमासाद्य यावन्न दहते तनुम्।
तावन्न मुच्यते सा हि स्त्रीशरीरात् कथंचन ॥

(विष्णुस्मृतिः)

यः स्वनारीं परित्यज्य निर्दोषां कुलसम्भवाम्।
परदाररतो हि स्यादन्यां वा कुरुते स्त्रियम् ॥
सोऽन्यजन्मनि देवेशि स्त्री भूत्वा विधवा भवेत्।
या नारी तु पतिं त्यक्त्वा मनोवाक्कायकर्मभिः ॥
रहः करोति वै जारं गत्वा वा पुरुषान्तरम्।

तेन कर्मविपाकेन सा नारी विधवा भवेत् ॥

( स्कन्दपुराणेऽरुन्धत्याख्याने )

कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात् पत्यौ प्रते परस्य तु ॥
मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्यव्रते स्थिता ।
स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः ॥

( मनुधर्मशास्त्रे पञ्चमाध्याये )

वर्णाश्रमधर्मं मन्यमानाया आर्यजाते र्हिन्दुजाते र्वा अन्येऽपि नैके विशेषधर्मा वर्त्तन्ते, यथा—वेदेषु स्मृतिपुराणतन्त्रशास्त्रादिषु च दृढतरो विश्वासः, दैवे जगति तदुच्चपदधारिवर्गे च परमो विश्वासः, कर्मणामधिदैवशक्तौ, कर्मणो वीजात्मके संस्कारसमूहे, जन्मान्तरसिद्धान्ते, परलोकगतात्मसम्बर्द्धनकृत्येषु श्राद्धतर्पणादिषु, अवतारतत्त्वे विभूतितत्त्वे, उपासनाया विविधभेदे, योगसाधने, मूर्त्तिपूजायाम्, पीठतत्त्वे, शुद्ध्यशुद्धिविवेके, यज्ञे, महायज्ञादौ, सर्वशक्तेरीश्वरस्य सगुणनिर्गुणात्मकस्वरूपे च परमा प्रतीतिः । सर्व एवैते वर्णाश्रमधर्मणां आचारविचारान्तर्गता विशेषधर्माः सन्ति । उदारचरितैर्वर्णाश्रमधर्मावलम्बिभिरुभयोरेव सनातनधर्मवर्णाश्रमधर्मयोः पार्थक्यप्रतिपादकं प्रभेदं महनीयं महत्वञ्चावगत्य स्वकीया विशेषता, निखिलैर्धर्ममतैः सह प्रेमपरम्परा च नूनं रक्षणीयेति दिक् ।

---

## श्रीशङ्कराचार्यमहाप्रभूणां स्वागतसमारोहः ।

श्रीमज्ज्योतिर्मठाधीश्वराणां पूज्यपादश्री १०८ श्रीमतां श्रीशङ्कराचार्यमहाप्रभूणां श्रीस्वामिवर्याणां श्रीब्रह्मानन्दसरस्वतीमहानुभावानां मध्यप्रदेशे खानदेशे च कटनी-जवलपुर-बुढ़ानपुरप्रभृति-प्रसिद्धनगरेषु महता समारोहेण समधिकैरानन्दोल्लासैश्च नानाजनसमूहः स्वागतमकरोत् । यत्र यत्र श्रीमदाचार्यचरणैर्गतम् सर्वत्रैव सनातनधर्मप्रचारोऽपि बाहुल्येन समजनि । यदा कुम्भमहामेलावसरे प्रयागे श्रीमदाचार्यचरणैः सदलबलमागतम्, तत्रापि सर्वेऽपि विद्वांसः श्रीमण्डलेश्वराः आखाडाध्यक्षाः विविधसम्प्रदायमुख्या महान्ताश्च परमोत्साहेन तत्स्वागतं विहितवन्तः । काश्यामागमनसमयेऽपि समस्ता एव प्रतिष्ठिता विबुधाः सन्न्यासिनः नागरिकाः छात्राश्च श्रीमदाचार्याणां धूमयानविरामस्थाने हार्दिकं स्वागतसमारोहं सम्पादितवन्तः । साम्प्रतं ते काशीतः प्रयागं गतवन्तः ।

ओंतत्सत्

# SURYODAYA

TRILINGUAL SPECIAL QUARTERLY EDITION,
MARCH, 1942.

## SANATAN DHARMA

(ETERNAL AND UNIVERSAL RELIGION)

According to the Vedas and all Hindu Scriptures the Sanatana Dharma is the Eternal and Universal Religion. The word 'Sanatana' means Eternal and 'Dharma' means Divine power of the Almighty by which the universe—the creation—is upheld and which regulates its harmonious action everywhere, both in microcosm and macrocosm and in Jada (material) and in Chetana (spiritual) worlds*.

The all-comprehensive, all-helpful and all-powerful Sanatana (Eternal) Dharma, as explained by the Hindu scriptures, is the fundamental Truth and Divine Law that pervade everywhere and in all religions and all creeds of the world and is applicable to all mankind. Sri Bhagawat Gita* says in a few words that (1) Dana Dharma (charity of all kinds), (2) Tapa Dharma (austerities—to bear with equanimity pleasures and pains as regards the material body and exercise of perfect restraint over one's thought and speech) and (3) Yajna Dharma (sacrifice with regard to Karma—actions, Upasana—worship and Jnana—knowledge) are the three aspects of Sanatana Dharma which are equally helpful to all men and women. Sri Shakti Gita gives a full illustration of these three divisions of the Eternal Dharma. According to this Gita* these three branches of Sanatana Dharma are divided into seventy-two *angas* (sub-divisions) and it also proves that there is no creed in the world that does not depend on some aspect or other of these Seventy-two *angas* of Sanatan Dharma for its existence. Sri Bhagawat Maha-Purana* declares that the Varna-

* For reference to original text regarding Sanatana Dharma and Varnashrama Dharma, please see the Sanskrit portion of this issue.

shrama Dharma is the Special Dharma of the Hindus and the Sanatan Dharma is intended for every human being, and says that the main principles (acharas) of Sanatan Dharma are thirty viz., 1. Satya (Truthfulness), 2. Daya (kindness), 3. Tapa (austerities—to bear with equanimity pleasure and pain as regards material body and to exercise perfect restraint with respect to one's thought and speech), 4. Shaucha (purity of mind and body), 5. Titiksha (endurance), 6. Iksha (wisdom, power of discrimination), 7. Shama (control of the inner faculties of mind), 8. Dama (self-control—restraint of all senses), 9. Ahimsa (abstinence from the tendency to afflict any creature), 10. Brahma-charya (celebacy—physical and mental), 11. Tyaga (Munificence and renunciation), 12. Swadhyaya (Regular study of spiritual literature), 13. Arjavam (straightforwardness—absence of duplicity), 14. Santosha (contentment), 15. Samadrikseva (service to those saints who regard all with equanimity), 16. Gramyehoparama (through regular practice achieving freedom from attachment to all worldly pleasures), 17. Nrinam viparyayeheksha (observatton of the mysterious ways of the Providence such as is expressed in the proverb—'Man proposes, God disposes), 18. Maunam (restraint of the organ of speech, 19. Atma-Vimarshanam (investigation into and realisation of Atman or Self), 20. Annadyadeh Samvibhago Bhutebhyashcha yatharthatah (Due distribution of food and other things among fellow beings and other creatures), 21. Bhuteshwatmadevatabudhih sutaram nrishu (Looking upon human beings and all creatures as one's tutelary diety), 22. Shrawanam (Hearing the hymns of the Lord in different ways), 23. Keertanam (Singing in praise of the Lord), 24. Smaranam (Concentration upon the Lord in different ways), 25. Seva (Doing service to the Lord), 26. Ijya (Performance of sacrifices to receive Lord's grace), 27. Awanatih (Prostration at the feet of the Lord), 28. Dasyam (Devotion to Lord as his servant), 29. Sakhyam (Feeling friendship for Lord), 30. Atmasamarpanam (Resigning of one's body and mind to the Lord). These thirty principles of Sanatan Dharma are, according to Maharshi Vedavyas, equally helpful to human beings of all creeds without any distinction.

The aim of all the religions of the world is to advance towards the realm of Heaven and ultimately to realize the Divine. The Sanatan Dharma in all creeds clears the way and helps in the realization. The yearning for this emancipation begins in a feeble way in the semi-civilized heart, but as civilization, refinement and knowledge grow

more and more in humanity, the divine might of the Sanatan Dharma becomes more and more effective in the advancement of the Soul towards the Supreme Being.

---

## VARNASHRAM DHARMA

(SPECIAL RELIGION OF THE HINDUS)

The Sanatan Dharma is the Sadharan Dharma, that is, general Dharma of all, but the Varnashram Dharma is the Vishesha Dharma that is, the special Dharma of the Hindus of Hindusthan. The Hindu Savants agree that all prophets, all revelations, all liturgies and all creeds have their due places assigned to them in the world of religions. The Varnashrami Hindus exclude no human being or creed, Indian or non-Indian, Aryan or non-Aryan, civilized or barbarian, from a place of candidature in his evolution to spiritual advancement. His right to the path towards the Divine is natural, as his origin is Divine. For this philosophical truth and for the realisation of the Fatherhood of God and of the Brotherhood of men, the Varnashrami Hindus alone know—as declared by the Great Maharshi Veda Vyasa that "to a man of generous mind (Udaracharita), the whole Earth is but one family-home".

The Savants of the Varnashrama Dharma in making general classification of the different systems of Dharma (creeds), established two separate groups—one the Vaidic Dharma—who believe in the Vedas, and the other Avaidic Dharma—which do not believe in the Vedas. Examples of the Vaidic Dharma are such as the Dharma of Shaiva Sampradaya, Lingayat Pantha, Shakta Sampradaya, Saura Sampradaya, Shuddhadwaita Sampradaya, Nanak Pantha etc; and that of Avaidic Dharma are such as the Dharmas of Buddhism, Christianity, Judaism, Mohammedanism, Zoroastrianism etc. Of course all of them have their separate rituals, dogmas, special devotional practices etc. according to their own respective creed. But as said above, an Udara-charita, man of generosity having inner light, realises that the goal is one in all religious systems of the world and that the goal is the realisation of the Divine. The Upanishads of the Hindu religion say—"Just as ups and downs, hills and dales, plains and valleys, seas and rivers, the tall and the stunted, appear to the man

walking on the earth's surface, but all such inequalities merge into one flat level in the eye of the observer up in the sky travelling in an air-boat. So insignificant, negligible differences in various religions vanish with the man who has attained Knowledge (spiritual) and who rises superior to the consciousness of the opposites".

The special Dharma of the Hindus of Hindusthan is called Varnashram Dharma. The fundamental principles of Varnashram Dharma are as follows :—

(1) The Hindus believe that the Vedas are eternal and other Shastras (other scriptures) are not man-made but came through revelations from the occult world. (2) They believe in the existence of the mighty occult world and occult office-bearers, several Devas, Devis, Rishis, Pitris and several grades of them and Asuras (who are rivals of Devas) and that these Devas and Asuras have their abodes scattered into twenty-four Lokas in our universe. (3) They believe in the Divine Law of Karma and in the power of its *seeds*—the Samskara, i, e., the Religious purification ceremonies. (4) They believe in philosophical theory of transmigration of the Jiva-Soul and also in the cycle of birth and rebirth and such ceremonies as "Shraddha"—rituals for giving spiritual and occult help to the departed. (5) They believe in the philosophical aspect of the creation in connection with the several grades of Avataras and Vibhutees ; the Avataras (incarnations) may be of the Preserver of the creation—the Vishnu Bhagawan or of different Devas i. e., the Occult Governors and controllers of Karma from seven higher worlds or those of Asuras from the seven lower occult worlds. (6) They believe in the scientific theory of four grades of Yoga (devotional practices) for reaching the realm of Heaven and for the realisation of the self. (7) They believe in the scientific and philosophical theory of Murti-puja i. e., Image-worship, and Pith i. e., mystic circle of occult forces. (8) They believe in the scientific theory of touchability and untouchability. (9) They believe in Yajnas and Mahayajnas, i. e., sacrificial ceremonies for establishing connecting link with occult organisation for acquiring material and spiritual uplift or for pleasing occult Governors or for receiving grace of Almighty. (10) They believe in the Theological theory of Saguna Brahman i. e., conception of the Almighty God through attributes and Nirguna Brahman, i. e., the Supreme without any attribute and Mukti, i. e., Salvation—merging in Him. Lastly (11) they believe in

रुपाधिभिः। इदानीन्तनीयं शिक्षाप्रणाली या बहोः कालात्प्रचालितास्ति सा तु योग्यानध्यापकान्सृजति तदर्थमेवासीत्प्रचारिता। अतोध्यापकोत्पत्तये सृष्टाया अस्याः प्रणाल्या आघातं विनैव यद्युपदेशकादीनां सृष्टये द्वित्रयवर्षसाध्यां कांचिदभिनवां पद्धतिन्निर्मित्सति भवाँस्तदा न मे विप्रतिपत्तिः। आवश्यकञ्चैतत् यत्सर्वेऽध्यापका अध्येतारश्च स्वं स्वं लौकिकं व्यवहारं तथा पावयन्तु येनैतेषां सत्यवादितादिसद्गुणैरप्येते सर्वैराद्रियेरन्। छात्राश्च वर्तमानोच्छृङ्खलताया वात्यां निरस्य साधुवेशभूषालङ्कृताः सन्ध्यातर्पणादिनित्यकर्मतत्परा भवेयुः। यत्र यत्र संस्कृतविद्यालयाश्छात्रावासा वा स्युः तेषान्तथा शुद्धता प्रक्षालनं च भवेद्येनैतद्दर्शनमात्रेणैव आस्तिकजनप्रिया प्राक्तनी आर्षी दैवी च संस्कृतिर्द्रुतं स्मृतिपथमारोहेदित्येष एव पन्थाः श्रेयस्करः, न तु सर्वत्र स्कूल, मदरसा, कालेज, प्रभृतिषु नियतपाठ्यग्रन्थान् पाठयितुमेव प्रयततामन्यथा तेषु सत्सु काऽऽवश्यकतास्ति पृथक् संस्कृतपाठशालानामित्यपि कोलाहलः कर्णविवरं सत्वरमेव पूरयिष्यतीत्यलमतिपल्लवितेन।

---

[ श्रीमत्परमहंसपरिव्राजकाचार्य्यपदवाक्यप्रमाणपारावारपारीण-यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ - तपश्चर्याचरणचक्रवर्त्यनादिगुरुपरम्पराप्राप्तवैदिकदर्शनमतस्थापनाचार्य - सकलनिगमागमसारहृदयवैदिकमार्गप्रवर्त्तकसर्वतन्त्रस्वतन्त्र-चातुर्वर्ण्यशिक्षक - श्रीमन्महाराजाधिराजगुरु - भूमण्डलाचार्य-जगद्गुरु श्री १०८ श्रीमदादिशङ्कराचार्य्य-भगवत्पादपद्मभृङ्गायमानालकनन्दागङ्गातीरनिवास्युत्तराम्नायश्रीमज्ज्योतिष्पीठाधीश्वरानवद्यविद्याद्युतिद्योतितहृदयदृश्यमानदयार्द्रीकृतदीनजनशरण्यश्रीमद्ब्रह्मानन्दसरस्वतीस्वामिपादारविन्देषु समर्पितसम्मानपत्रमाकलयतु चञ्चरीकलीलाम्। ]

श्रीमच्छंकरशंकरामितमतप्रोद्भासिरत्नच्छटा-
धाराधारगलाधरोऽभ्यितनयालीलासवन्त्याधरः।
कायव्यूहविभागभूषितकलिव्याहारलोपाङ्कुरो-
धर्माचार्यवरः पुरोऽद्य महता पुण्येन लब्धो जनैः॥ १॥

हिन्दुप्राणिपरम्परापरिचितप्रोद्भूतधर्माहित-
स्वान्ताचारिमहर्षिपुङ्गवपदप्रक्षुण्णधर्मायनम्।
आविष्कर्त्तुममन्दयत्ननिवहं सूक्ष्मातिसूक्ष्मं विध-
त्तेऽर्वाचीनविरुद्धमार्गदमने सन्नद्धयोधः परम्॥ २॥

हिन्दुव्रातललामलालितलसत्संसन्महामन्दिर-
प्रोत्तुङ्गद्युतिसाधनैकवसतिर्धर्मध्वजो रक्षितः ।
आघातप्रतिघातसङ्कुलचलत्सर्वाङ्गभागस्सदा-
येनाकल्पमनल्पशिल्पनिकरैरस्वल्पचित्रीकृतः ॥ ३ ॥
ब्रह्माद्वैतरसामृतेन नितरां तृप्तः परं निस्पृह-
श्शास्त्राम्भोनिधिमन्थनोत्तमतमप्रज्ञाप्रमन्थाश्रयः ।
लोकानुग्रहवाञ्छया मृदुपदैश्शास्त्रोक्तसारोच्चयै-
र्ग्राहारैर्जनमानसं प्रमुदितं कुर्वन्नहो दृश्यते ॥ ४ ॥
यो वेदान्तसमुद्रमन्थनतया मन्थाद्रिवद्राजते-
यो वै सत्कवितामहार्हमणिना चाम्भोधिवद्भ्राजते ।
यो धर्मोपवनोन्नतोन्नतिफलैर्वृत्तालिवद्दीप्यते-
स श्रीमान् गृहमागतोऽद्य परमं कौतूहलं किन्वितः ॥ ५ ॥
एतन्मानसविष्टरे हि कृपया पादौ सुखं न्यस्यता-
दाज्ञा चेत्स्नपयामि नेत्रपयसा श्रीमत्पदाम्भोरुहे ।
फुल्लं पुष्पमिदं मनः सुविमलं गन्धं च जीवं च मे-
चेतोधूप इति प्रदीपममतां गृह्णातु शिष्यार्पितम् ॥ ६ ॥
नैवेद्यं रचितं मया रुचिकरं ज्ञानेन्द्रियैः पञ्चकै-
रम्भाद्यैर्विमलैः फलैः समधुरैः कर्मेन्द्रियैः संयुतम् ।
पेयं स्वादु जलं च पञ्चपवनैः प्राणादिकैः कल्पितं-
ताम्बूलं प्रतिगृह्यतां च कृपया स्थूलेन देहेन मे ॥ ७ ॥
अर्थिप्रार्थितपूरणं तव फलं हे साधुकल्पद्रुम !
श्रुत्वा मामकवाक्यजालमधुना द्रष्टुं दयालुर्भवेत् ।
न्यायव्याकरणादिशास्त्रपठने दक्षैस्सुशिष्यैर्युतं-
सद्विद्याभवनं भवत्यपि भवत्यंशेन किंबन्ध्यता ॥ ८ ॥

श्रीमतामाश्रवो

जाबालिपुरसंशोभितविद्वत्परिषदभ्यनुज्ञातस्स्वर्गीयज्योतिर्विदाचार्य-पण्डितवरलक्ष्मीप्रसादपाठकविद्याभूषणसंस्थापितम्युनिसिपलश्रीगायत्री-संस्कृतकालेजप्रिंसिपलविद्यावारिधिदर्शनकेशरिपण्डितश्रीलोकनाथशास्त्री ।

# "श्रीकालीप्रसादमिश्रप्रत्याख्यानप्रत्याख्यानम्"

"लेखकाः—काशीस्थविरलासंस्कृतमहाविद्यालया-( कालेज ) ध्यापकाः
पञ्चोल्युपनामकपण्डितश्रीबालकृष्णशास्त्रिणः"

ऐषमस्तनमार्गशीर्षमासे चतुर्थसङ्ख्यिकायां प्रकाशितस्य पण्डितप्रवररामभवनशर्मोपाध्यायकृतालोचनमत्कृतप्रत्यालोचनस्य त्रिचतमासान् परिश्रम्य कृतस्य पण्डितकालीप्रसादमिश्र प्रत्याख्यानस्य तत्त्वातत्त्वे विविच्येते ।

तत्रादौ मिश्रोक्तप्रस्तावनामाश्रित्य किञ्चिदुच्यते—दिगन्तप्रसिद्धकाशीस्थविरलासंस्कृतमहाविद्यालया-( कालेज ) ध्यापकं मां जानतोऽपि मिश्रस्य "कस्यचित्" इत्यपरिचितत्वेनोक्तिः परिचितानां विपश्चितां चेतांसि चित्रीयते । किञ्च संस्कृतशिक्षापद्धतिविषये वैमत्यप्रयुक्ताक्षेपभावनामादाय पञ्चोल्युपनामक पं० बालकृष्णशर्मणा मद्गुरुवरसमालोचनप्रत्यालोचनं विहितमिति प्रतीपलेखनमात्रेण मिश्रप्रकल्पितं तात्पर्यं विद्वन्मूर्धन्यरत्नाकरसम्पादक-( प्रकाशक ) लेखसमालोचनेन भवद्गुरुमपि किन्न स्पृशेत् । वस्तुतस्तु "वादे वादे जायते तत्त्वबोधः" इति पवित्रतमं सिद्धान्तमनुसृत्यैव समालोचनप्रत्यालोचने प्रवृत्तिरस्माकमिति विभावनीयं सूरिभिः ।

१—उपाध्यायैर्विशेष्यतावच्छेदकधर्मप्रकारकनिश्चयत्वावच्छिन्ननिरूपितकार्यताया वैशिष्ट्यावगाहिबुद्धित्वेऽवच्छेदकत्वमभिहितम् , तत्र यथा 'घट' इत्याकारकबुद्धेरपि वैशिष्ट्यावगाहितया तत्र निर्विकल्पात्मकघटत्वज्ञानस्यैव कारणत्वेन विशेषणताऽवच्छेदकधर्मप्रकारकनिश्चयस्य कारणत्वाभिधानं न प्रेक्षावतां प्रेक्षापथमारोहतीति प्रतिपादितम् । तत्रोपाध्यायशिष्येण पण्डितकालीप्रसादमिश्रेणोपाध्यायोक्तकार्यकारणभावस्य समर्थनं वक्ष्यमाणरीत्या व्यवस्थापितम् "शब्दस्यापि सर्वानुभूतिविषयत्वं वैयाकरणनिकाये प्रसिद्धमस्ति, शब्दानालिङ्गितप्रत्ययस्यानभ्युपगमात् , अर्थाः प्रतीयमाना नामधेयैरुपेता इत्यादि वचनाच्च······एवञ्च 'घट' इत्याकारकबुद्धिरपि आनुपूर्वीविशिष्टशब्दमेव[1] प्रकारीकुरुते......एवमेव पञ्चकं प्रातिपदिकार्थं इति नये पुंस्त्वत्वादिना भासितस्यैव पुंस्त्वादेरपि प्रकारकत्वम् .........इति 'घट' इति बुद्धौ व्यभिचारोद्भावनं प्रत्यालोचकस्य भ्रमविजृम्भितमेव" अत्र ब्रूमः—मिश्रोक्तं प्रत्याख्यानं 'धूलिप्रक्षेप' न्यायावलम्बेन कस्यचित् सन्तोषमावहदपि सूक्ष्मेक्षिकावतां विदुषां प्रेक्षापथं नाधिरोहति । तथाहि—'घट' इत्यस्य घटशब्दवाच्यो घट इत्याकारकबुद्धित्वाङ्गीकारेऽपि तत्र प्रकारीभूतघटशब्दस्य नियमेन भानात् तज्ज्ञानस्य कारणत्वेऽपि कारणीभूतस्य घटशब्दज्ञानस्यापि स्वरूपसम्बन्धेन समवाय-

१—अत्र 'एव' शब्दोऽसङ्गतः, घटत्वस्यापि प्रकारत्वात् ।

सम्बन्धेन वा घटत्वरूपानुपूर्वीप्रकारकत्वेन वैशिष्ट्यावगाहितया तत्र च निर्विकल्पकघटत्वरूपानुपूर्वीज्ञानस्यैव कारणतया तत्र व्यभिचारतादवस्थ्यात्, शब्दज्ञानस्य कारणत्वेऽपि निर्विकल्पात्मकघटत्वज्ञानस्य कारणत्वे बाधकाभावात्, मतान्तरे व्यभिचारस्य दुर्निवारत्वाच्च प्रत्याचक्षाणस्य मिश्रस्य "भ्रमविजृम्भितमेव" इति कथनमेव भ्रमविजृम्भितमिति न तिरोहितं स्यान्मतिमताम्।

किञ्च वैयाकरणमतेनैव समाधानाऽभावप्रदर्शनेन नैयायिकादिमते व्यभिचारदोषतादवस्थ्यं समाधातरि शुष्कवैयाकरणत्वकलङ्कपङ्कं निदधाति। निर्विकल्पकेऽपि शब्दभानाङ्गीकारे तस्य सर्वदार्शनिकाभिमतनिर्विकल्पकत्वानुपपत्तिः, विशेषणज्ञानस्य विशिष्टज्ञानकारणत्वेऽनवस्थाप्रसङ्गश्च।

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इत्यादि हर्युक्तौ प्रत्ययपदेन प्रवृत्तिनिवृत्तिप्रयोजकज्ञानस्य ग्रहणम्। अन्यथा वैयाकरणमते घटादिशब्दानां शब्दविशिष्टेऽर्थे अर्थविशिष्टे शब्दे च विनिगमनाविरहेण शक्तिस्वीकारे गौरवात् शब्दे अर्थे च खण्डशः शक्तेरेव स्वीकृतत्वेन अर्थविषयकशक्तिज्ञानेन अर्थमात्रविषयकोपस्थितौ तस्यापि ज्ञानत्वेन तत्र च शब्दस्य अविषयत्वेन ज्ञानमात्रे शब्दभानकथनस्यासङ्गत्यापत्तिः। एवञ्च प्रवृत्तिनिवृत्तिप्रयोजकवाक्यार्थज्ञानस्य, विशिष्टज्ञानस्य वा "अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते" इत्यादि हर्युक्तौ ज्ञानादिशब्देन ग्रहणस्य तात्पर्यविषयत्वेन हरितात्पर्यानभिज्ञतया त्वद्रीत्या कार्यकारणभावसमर्थनं श्रीकालीप्रसादमिश्रसहस्रैरपि कर्त्तुमशक्यमेव।

२—"शिक्षाशब्दप्रवृत्तिनिमित्तं शक्तिविकाशेच्छेति गुरुचरणानां मतमिति मत्वैव तत्खण्डने प्रवृत्तो भाति भवान्......यदिदं शिक्षाङ्कसम्पादकानां मतं न तु गुरुचरणानाम्" इति मिश्रेणाभिहितम्। तत्रेदमुच्यते—शिक्षाशब्दार्थंशक्तिविकाशेच्छारूपं प्रदर्शयता सम्पादकेन शक्तिविकाशेच्छायाः प्रवृत्तिनिमित्तत्वं कुत्रापि नोक्तम्, किन्तु भावत्कगुरुभिरेव सम्पादकाभिमतं प्रवृत्तिनिमित्तमूहित्वा किञ्चिदुक्तम्। तत्र तदूहितप्रवृत्तिनिमित्तस्यैव खण्डनमभिमतमस्माकमिति तत्र भवदाक्षेपः खण्डयितुं ममाशयानभिज्ञतां प्रकाशयति।

किञ्च तत्र साध्यभूतेच्छायाः कथञ्चित्प्रवृत्तिनिमित्तत्वेऽपि शक्तिविकाशेच्छारूपपदार्थस्योपाध्यायाभिमतप्रवृत्तिनिमित्तत्वन्तु दुरापास्तमेव, साध्यभूतायां शक्तिविकाशेच्छायां वृत्तिज्ञानजन्योपस्थितीयमुख्यविशेष्यत्वासमानाधिकरणप्रकारतारूपपदार्थैकदेशतायाः सत्त्वेन पदार्थस्य प्रवृत्तिनिमित्तत्वाभिधानम् अज्ञानविजृम्भणम्, उपस्थितीयप्रकारताऽश्रयस्यापि पदार्थत्वे "पदार्थः पदार्थेनान्वेति न तु पदार्थैक-

देशेन" इति व्युत्पत्तिविरोधापत्तेः । किञ्च भावकृत्प्रत्ययस्थले क्रियाया चारद्वयं भानस्यानुभवविरुद्धत्वेन निरूपकभेदादेकत्र पितृत्व-भ्रातृत्वादिवदेकस्या एव क्रियाया निरूपकभेदात् साध्यत्वेन सिद्धत्वेन च लाघवात् भानाङ्गीकारस्यौचित्येन त्वदुक्ते-च्छाया अपि प्रवृत्तिनिमित्तत्वं दुर्वचमेव ।

३—योऽपि 'प्रतिपदोक्त' परिभाषाविषयाभावाभावो मिश्रेण निगदितः, सोऽपि उपहास्यकर एव, वैयाकरणनिकाये विधेयस्यैव प्रतिपदोक्ततायाः सर्वाभिमतत्वेन "शिक्षापद्धतिर्विवेचनीया" इति स्वकल्पितवाक्यमादायैव परिभाषाविषयत्वस्य मिश्रैरुक्तत्वेन तत्र विवेचनाविषयत्व एव विधेयतायास्तेनैवोक्तत्वेन तत्रैव च परिष्कृतप्रतिपदोक्तत्वस्य सत्त्वेन त्वदभिमतशिक्षशब्दे प्रतिपदोक्तत्वस्य खपुष्पायमाणत्वेनमिश्रस्य बालचापल्यम्, अन्यस्य वेति सुधीभिरेवाऽकलनीयम् ।

४—यदपि 'शिक्षेर्जिज्ञासायाम्' इत्यत्र प्रतिपदोक्तस्य शिक्षेर्ग्रहणेऽनुदात्तेत्त्वस्योपाध्यायोक्तवैयर्थ्योद्भावनाखण्डनाय मत्प्रदर्शितचारितार्थ्यस्य मिश्रकृतं खण्डनं तदप्यकिञ्चित्करमेव, "अविवक्षातः कर्मणोऽकर्मिकाक्रिया" इति सिद्धान्तात् शिक्षेरकर्मकत्वाङ्गीकारेण युजर्थमनुदात्तेत्त्वचारितार्थ्यस्य वक्तुं शक्यत्वात् । अत एवाकर्मकाधिकारे "समोगम्यृच्छिभ्याम्" १।३।२९ । इत्यादि सूत्रम् "अर्तिश्रुदृशिभ्यश्च" इति वार्तिकञ्च सङ्गच्छते ।

यदपि "तास्यनुदात्तेत्" इति सूत्रस्य शबादिव्यवधानेनाप्रवृत्त्याऽनुदात्तेत्त्वचारितार्थ्यखण्डनं तदप्यज्ञानविलसितम् शबादिव्यवधाने चारितार्थ्यस्य मयाऽनुक्तत्वेन यङ्लुगन्तस्य "चर्करीतञ्च" इत्यनेनादादित्वबोधनात् तत्र शपो लुकापहृतत्वेन तास्यनुदात्तेदित्यस्य प्रवृत्तौ बाधकाभावात् । न च "श्तिपा शपा" इति निषेधः, तस्य भाष्यानुक्तत्वेनाप्रामाणिकत्वस्य शेखरे व्यवस्थापितत्वात्, अनित्यत्वाच्च ।

५—(क) यच्च नानार्थत्वस्याननुगतनानाधर्मावच्छिन्ननिरूपितशक्तिनिरूपकताऽवच्छेदकैकधर्मवत्त्वस्य मिश्रोक्तं नितान्ताशुद्धत्वाभिधानम्, तत्तु अत्यन्ताज्ञानावभासकम्, उक्तलक्षणे नानाधर्मावच्छिन्ननिरूपितत्वस्यैकस्यां शक्तावनुक्तत्वात् । अत एव "नानाधर्मावच्छिन्ननिरूपितत्वस्यैकस्यां शक्तौ विरहेण" इति मिश्रोक्तिः खेदयति सचेतसां चेतः । उक्तलक्षणस्य चेत्थं समन्वयः—इन्द्रत्व-सूर्यत्वादिनानाधर्मपर्याप्तावच्छेदकतानिरूपितावच्छेद्यतावती या इन्द्राद्यर्थनिष्ठा शक्यता तन्निरूपितशक्ततावच्छेदकीभूतो य एको धर्मो हरित्वादिरूपानुपूर्वीरूपस्तद्धर्मवत्त्वं हर्यादिनानार्थकशब्दस्येत्यशुद्धत्वाभिधानं पाण्डित्ये वैशिष्ट्याभावं द्योतयति । पुष्पवत्पदादौ तु त्वदुक्ता नातिव्याप्तिः, तत्र शक्यताऽवच्छेदकतायाः सूर्यत्वचन्द्रत्वोभयपर्याप्तत्वात् ।

( ख ) यच्च पदार्थत्वलक्षणखण्डनं भवता कृतं तदपि न समीचीनम् , पदार्थत्वम्—पदजन्योपस्थितीयमुख्यविशेष्यतया प्रतीतिभूतत्वमित्यस्य पदनिष्ठवृत्तिज्ञानजन्योपस्थितीयमुख्यविशेष्यतासम्बन्धेन वृत्तिज्ञानजन्योपस्थितिविशिष्टत्वमर्थस्तस्य च घटादौ सत्त्वेन प्रतीतिविशेषे चासत्त्वेन "घटादौ घटपदार्थताया उच्छेदापत्तेः, प्रतीतिविशेषे चातिव्याप्तिः" इति भवदुक्तेर्व्याहतत्वात् ।

( ग ) यत्तु "सन्नन्तादपि अप्रत्ययेन साधने बाधकाभावात्" इति मदुक्त्या सन्नन्तादपि "गुरोश्च हलः" इत्यनेन अप्रत्यय इति मत्तात्पर्यं कल्पयित्वा तत्खण्डनं तत्तु स्वकपोलकल्पितम् , तत्र "अ प्रत्ययात्" इत्यनेनैव अप्रत्ययस्य अस्मदभिमतत्वात्

६—संस्कृतशिक्षापद्धतिविषये भवदुक्ता गुणदोषा अतिफल्गुत्वात् विचारानर्हत्वेन उपेक्ष्यन्ते । संस्कृतशिक्षापद्धतिः कीदृशी प्रगाढपाण्डित्यसम्पादिका सर्वथा हितकरी चेत्यत्र विषये संस्कृतरत्नाकरस्य "शिक्षाङ्के" सर्वतन्त्रस्वतन्त्रैर्माननीयैर्महामहोपाध्याय पं० गिरिधरशर्मचतुर्वेदैर्विस्तरेण गुणदोषाः परीक्षितास्तत्स्वरूपञ्च निरूपितमिति मन्ये तद्दर्शनेन शिक्षापद्धतिविषये सर्वेषां स्वान्तं सन्तोषमासादयेद् ऋते पक्षपातप्रियेभ्यो विद्वद्भ्य इत्यलमतिविस्तरेण । इति शम् ।

---

## उद्बोधनम् ।

रचयिता—पं० चन्द्रदेवशर्मा, वेदव्याकरणसाहित्यधर्मशास्त्राचार्यः
पुराणतीर्थः, साहित्यरत्नम् ।

( अध्यापकः—राजसंस्कृतविद्यालय-वेतिया, चम्पारन )

वशंवदाशेषभुवो महीशाः कामस्य तृप्तौ यदि तेऽप्यनीशाः ।
तदर्थमात्मानमुरुक्षिपन्तः कथन्नु शान्तिं तिरयन्ति सन्तः ॥१३॥

शेते यदर्थं न कणेनिहत्य प्रणाशिनस्तान् विषयानवेत्य ।
भजेत लोकः परमार्थतत्त्वं श्रयन् विशुद्धं सुखमात्मसत्त्वम् ॥१४॥

वशंवदश्चेत्प्रकृतेर्गुणानां करोति कश्चिद्यदि सज्जनानाम् ।
प्रतीपमात्मज्ञतया न कोपम् व्रजन्तु सन्तः सुकृतानुलोपम् ॥१५॥

लोभं परं मूलमिहामनन्ति पापस्य येनातितरां नमन्ति ।
दैन्यं गताः सर्वजनेषु मानम् विधूय भूयोऽश्नुवतेऽपमानम् ॥१६॥

मोहाभिभूतो न जनः कथञ्चिद् विवेक्तुमीशः सुकृतं नु किञ्चित् ।
येनात्मपाताय मतेः प्रसारम् न यान्ति तस्य त्यजत प्रचारम् ॥१७॥
मदस्य मद्यादपि मादकत्वं विदन्तु भूयो न यतो महत्त्वम् ।
अधःपतन्नेष जनो भजेन्न सतः कृतपन्नापदमाश्रयेत ॥१८॥
मात्सर्यमप्यार्यजनैर्न धार्यम् मनो न येनार्यगुणानुकार्यम् ।
दन्दह्यते प्रत्युतशश्वदूनं तेजः सहः स्यादभवाय नूनम् ॥१९॥
इत्थ विविच्याखिलदोषजातम् निरन्तरं तत्कृतमात्मपातम् ।
मतिर्विधेयाऽभ्युदयाय सद्यः प्रमादपाशु प्रजहद्भिरद्य ॥२०॥
भूमावधर्मोऽस्ति कलेः प्रकर्षे दूरे व्यपेते गुणसन्निकर्षे ।
समन्ततस्ताण्डवमादधानः प्रजाक्षये शक्तिमुरुं दधानः ॥२१॥
स्वार्थेन सर्वत्र पदं गृहीतम् परार्थभावस्य पदं विगीतम् ।
लक्ष्यं पुनर्नश्वरमर्थजातम् तस्याप्यलं तुच्छतया विभातम् ॥२२॥
फलस्वरूपं कलहायमानाः प्रजाः स्वतन्त्राऽपि विहायमानाः ।
विश्वं समन्ताद् विदधत्यशान्तं का नाम शान्तिः कुत एव नान्तम् ॥२३॥
सत्यं निलीनं गिरिकन्दरेषु मिथ्योज्जिहीते द्विजमन्दिरेषु ।
असूँश्च सत्याय पुरा पणन्तः पणाय सन्त्यद्य मुधा भणन्तः ॥२४॥
शौचं सदालस्यवशाद् विहाय मनः शरीरैकसुखे निधाय ।
नानाविधव्याधिसमाकुलानि नित्यं प्रणश्यन्ति नृणां कुलानि ॥२५॥
लिङ्गं द्विजत्वस्य सुधर्ममूलम् विश्वं यतः स्याद् विभवानुकूलम् ।
भूतानुकम्पा नितरामतीता सा सर्वशास्त्रेषु सदा प्रतीता ॥२६॥
दानं परं धर्मविधारकाणाम् आहुर्वरास्तत्त्वविचारकाणाम् ।
सत्पात्रदात्रो र्नितरामभावात् तदप्यपेतं समयप्रभावात् ॥२७॥

( सावशेषम् )

---

## वरं विरोधोऽपि समम् महात्मभिः ।

( ले०—वि० भूधरात्मज तेजोराम शर्मा )

साधुभिः सह विरोधोऽपि कल्याणाय कल्पते इति कविभिः उच्यते । महात्मभिः सह विरोधः उपकारकः न तु अपकारकः । खलैः सह विरोधोऽवनतिं नयति नत्व-भ्युदयं । द्वयोरपि—उदाहरणं ज्ञेयम्—

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते॥
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः।

परञ्च उक्तरीत्या दुर्जनः शाम्यति सज्जनस्तु न। तेनैव महात्मभिः सह वैरं करणीयम्। दृश्यते खल्विह संसारे यत् यादृशी भावना जायते तदा मानवोऽपि तादृशान्येव कर्माणि समाचरति। एवं महात्मभिः सह विरोधे समुत्पन्ने सति अहर्निशं तेषां कार्याणां चिन्तनं मानवस्य हृदये भवति। तदानीं सः चिन्तयति–अहो मयाऽपि शुभानि कर्माण्यनुष्ठेयानि। अन्यथा कथमेतादृशीं पदवीं प्राप्नुयाम्। एवं शत्रु-कार्येषु संलग्नचेता मानवोऽपि अभ्युदयशिखरमारोढुं यतेत। पुराणेषु ईदृशानि बहूनि उदाहरणानि सन्ति, यत् बहवः श्रीभगवता सह वैरं विधाय मोक्षं प्राप्ताः। यथा कीटः सततं भ्रमरीं ध्यायन् कीटत्वं विहाय भ्रमरीरूपे परिणतो भवति तर्हि अहर्निशं भगवन्तं स्मरन् कथं न तावत् भगवद्रूपं प्राप्नुयात्। यथा रावणादयः।

भागवतपुराणे एका कथा वर्तते। पुरा सनत्कुमारा भगवद्दर्शनार्थं तद्धाम गतवन्तः। परञ्च जयविजयाख्याभ्यां भगवत्पार्षदाभ्यां अवरुद्धा एवमुक्ताश्च। यूयं बालाः खलु। युष्मभ्यं भगवद्दर्शनमशक्यं खलु, प्रतिनिवर्तध्वं स्वमाश्रमपदं। इति तयोर्वचनं प्रतिश्रुत्य क्रोधिताः सनत्कुमाराः शापप्रदातुमुपस्थिताः। तान् सनत्कुमारान् कुपितान् विलोक्य सहसा श्रीभगवान् विष्णुः सिंहासनादुत्थाय तत्र समागत्य जयविजयौ उक्तवान्। अहो! आवाभ्यां पातकं कृतं एतद्दोषेण युवां जन्मान्तरे राक्षसयोनिं प्राप्स्यथः। मयि भक्ति–विधाय सप्तजन्मान्तरे पुनः माम् लप्स्यथः। परञ्च मयि वैरं विधाय त्रिजन्मान्तरे मत्पदवीं लप्स्यथः। प्रथमजन्मनि हिरण्याक्षहिरण्यकश्यपू द्वितीयजन्मनि रावणकुम्भकर्णौ, तृतीय जन्मनि शिशुपालदन्तवक्त्रौ इति तयोः त्रिजन्मानि व्यत्ययुः।

अहो! पश्यन्तु तावत् भगवता सह विरोधप्रभावम्। अतः सुष्ठु तर्कितं कविना–वरं विरोधोऽपि समं महात्मभिः।

## शुभाभिनन्दनम्।

[ श्रीमतां डाक्टर 'राजा' बलदेवदासविरलामहोदयानां पौत्रस्यायुष्मतः श्रीवसन्तकुमारविरला-महोदयस्य शुभविवाहमहोत्सवे विदुषां शुभाशीर्वादाः ]

राजा श्रीबलदेवदासविरला मान्यो वदान्यो महान्
　　यो नित्यं नियमान् यमानधिवसन् काशीपुरीं सेवते॥

वेदान्ताम्बुधिमन्थनाहितमतिर्गार्हस्थ्यमप्याश्रयन् ,
विद्वत्सङ्घसमर्चकः सुविदितो राजर्षिकल्पः सुधीः ॥
श्रीवसन्तकुमारो यस्तस्य पौत्रस्सुधीर्वरः ।
सौभाग्यारोग्यसम्पद्भिश्चिरं जीव्यात्स दारकः ॥
परिणयनविधिः श्वस्तस्य वत्सस्य भावी
सुचिरमिह लभेत प्रेम दाम्पत्यजं सः ॥
वयमपि समवेताः सत्कृताः साधु राज्ञा
स्वहृदयत इदानीं स्वाशिषः स्वर्पयामः ॥

[ वैशाखशुक्लचतुर्दश्याम् उपर्युक्तमहोत्सवोपलक्ष्ये काशीस्थविदुषां महती सभा संजाता तत्रैव-माशीर्वादात्मकं शुभाभिनन्दनं सर्वैर्मिलित्वा प्रदत्तम् । तच्च तदानीमेव विदुषां शुभाशीर्वादैः सह कलकत्तानगरे प्रेषितमभूत् । सं० ]

## महर्षिकात्यायनेः संक्षेपचरित्रम् ।

( ले०—भानुकुमारशर्मा विद्यार्थी, हैदराबाद )

अस्ति चातुर्वर्ण्यप्रजापरिषेव्यमाणा क्षितितलालङ्कारायमाणा कुशाम्बेन निर्वृत्ता कौशाम्बी नाम नगरी । तस्यां षट्कर्मानुष्ठानादिधर्मधुरीणो निगमागमविद्यापारावार-पारीणोऽग्रजन्माग्रणीः सोमदेवो वसति स्म । स च वसुदत्तायां श्रीभगवतीकात्यायनी-प्रसादादिव कियता कालेन कात्यायनिनामानं तनयं जनयामास । सोऽपि उपवर्ष-गुरुचरणारविन्दमकरन्दं सेवमानो विलक्षणचातुरीचमत्कारविशिष्टः पाणिनेः प्रतिस्पर्धी सहाध्यायी बभूव । एकदा पाणिनिना गुरोः सन्निधौ दर्शिताया अष्टाध्याय्या अद्भु-तचमत्कारशालिनीं रचनां निरीक्ष्य "समुत्पन्नसंघर्षः सः" अहमप्यस्या उपरि विस्मयो-त्पादकं किञ्चिदपूर्वं करिष्यामि इति मनसीकृत्य कञ्चिदाश्रमं गत्वा चतुर्दशविद्या-धीश्वरमीशानं तपसोपासनञ्चक्रे । गिरीशात् संप्राप्तवरदानोऽसौ प्रगल्भमनीषया वाक्यार्थरूपं पाणिन्यनुक्तार्थदर्शकम् आदर्शमिव वार्तिकाख्यं ग्रन्थमभूतपूर्वं वितताम । एतद्ग्रन्थनिर्माणानन्तरं वररुचिरिति तस्यापरनामधेयं संख्यावतां समाजे संख्याति-मगमत् । लक्षप्रयोगात्मकबृहत्कथाग्रन्थमपि अयमेव जग्रन्थ । कल्पसूत्रादिग्रन्थप्रणयन-सामर्थ्येन पण्डितमण्डलेऽग्रगण्यमुपगतः । कात्यायनिर्नन्दराजराज्यमन्त्रिपदवीमागत्य अखण्डभूमण्डलपण्डिताखण्डलख्यातिमासादयामास । तादृशीं तत्कृतिख्यातिमाकर्ण्य सं-जातामर्षः पाणिनिर्जाज्वल्यमानोऽनल इव तदाश्रममागत्य अर्घ्यपात्रेणातिथिसत्काराय प्रत्यागच्छन्तं तमवगणय्य "मत्प्रणीते शास्त्रे पुनरुक्ततादोषतादवस्थ्यरूपोन्निष्फलग्रन्थ-

त्वयानिर्मितोऽतः त्वमचिरादेवापमृत्युं प्राप्स्यसि" इति सहसा तस्मै शशाप । कात्यायनिरपि स्वापमानजनितामर्षपरिपूरितमानसो निर्दयहृदयं तं "गिरीशवरदानमजानानस्त्वं व्याघ्रवत् क्रूरकर्माऽसीत्यतो व्याघ्रादेव विजने वनेऽचिरादेव निधनमाप्नुहि" इति प्रतिशशाप। एवं मिथः शापजनितप्रभावेण तावुभौ त्रयोदश्यामेव पञ्चत्वमापतुरित्यतो वैयाकरणास्तत्तिथिं व्याकरणशास्त्रानध्यायत्वेनामनन्तीत्युदन्तं जागर्त्ति जगत्याम् ।

——:o:——

## श्रीरामकृष्णोदारभारती ।

तथायञ्चावतारस्ते भुवो भारजिहीर्षया ।
स्वानाञ्चानन्यभावानामनुध्यानाय चासकृत् ॥

श्रीरामकृष्णपरमहंसदेवः सार्द्धोनविंशशताब्दे कामारपुकुराख्ये ग्रामे ब्राह्मणखुदिरामस्य गृहे प्रादुरभूत् । । तत्राविर्भूय बाल्यलीलां परिसमाप्य यौवने कलिकाता-नगर्य्यामागच्छत् । आगत्य अस्या नगर्याः क्रोशव्यवहितोत्तरदिग्भागे पारेगङ्गमवस्थितताया रानीरासमणिनामधेयायाः कृपयाश्रित् कालीमन्दिरे दक्षिणेश्वरे भगवतीं कालिकादेवीं पूजयितुं नियुक्तो बभूव । तत्र स्थित्वा द्वादशवर्षाणि विभिन्नसम्प्रदायानां यानि साधनानि तान्यवलम्ब्य तपश्चकार इत्यादिकम् उक्तमन्यत्रास्माभिः, स सिद्धिलाभानन्तरम् ईश्वरेण प्रत्युपदिष्टः कथं केन प्रकारेण प्रतिगृहं गत्वा तत्र तत्र स्थित्वा च उत्तमश्लोकेश्वरस्य माहात्म्यं गुणानुवर्णनम् च जनसंसदि प्रचारयामास, तत् सर्व्वं ( श्रीमत्-कथित ) श्रीश्रीरामकृष्णकथामृतमवलम्ब्य निरूपयामः ।

आत्मारामा महात्मानो भीषणं भवसागरम् उत्तीर्णा अपि त्रितापदग्धानां मानवानामुद्धरणाय जगतो हिताय सनातनधर्म्मप्रतिष्ठापनाय च सुधांशुवत् भुवि विचरन्ति । एवं परमहंसदेवः श्रावणे मासि कृष्णपक्षे षष्ठ्यां तिथौ द्व्यशीत्यधिकाष्टादशशततमे ख्रीष्टाब्दे बादुरबागानाख्यस्थाने ईश्वरचन्द्रविद्यासागरगृहं भक्तैः सह आजगाम ।

भक्तवर्ग-परिवेष्टितम् प्रेमपाकपरिपूर्णविग्रहं ईश्वरीयकथासु सहर्षपुलकमश्रुविलोललोचनं रुचिरदेहकान्ति परमहंसदेवं दृष्ट्वा सर्व्वगुणालङ्कृतो विद्यासागरो यथाविधि पूजयाञ्चकार । कोऽयं परमहंसः किं तस्याचरणभाषणमित्यत्रोत्सुकाः पार्श्वगृहादन्यतश्च बान्धवाश्चान्ये श्रुतवृत्ता स्तत्र समुपस्थिताः । ततः प्रमोदेन परस्परं तौ आलापयामासतुः । स्वयं मानमनिच्छन्तो मानदा भवन्ति महात्मान इत्याह, श्रीरामकृष्णोऽहो मम भाग्यम् , यतोऽद्य त्वाम् दृष्ट्वा सागरं प्रविष्टोऽस्मि ।

विद्यासागरोऽवोचत् ( सहास्यम् ) तर्हि अस्मात् लवणसमुद्रात् किंचित् लवणाक्त-जलं गृहाण ।

श्रीरामकृष्णः—ये तु अविद्याकामकर्म्मप्रभवा मलिनमानसा आशापाशशतैर्बद्धा विवेकहीनास्ते लवणसमुद्रा इव भवितुमर्हन्ति । नैवं त्वम् । यतः क्षीरनिधिरिव बहु-गुणसम्पन्नोऽसि ।

विद्यासागरः—एवं वक्तुं शक्यते भवता ।

श्रीरामकृष्णः—लोकहिताय सत्त्वगुणप्रभवानि तव कर्म्माणि । सत्त्वगुणातिरेके दयादिगुणाः प्रभवन्ति । त्वं विद्यामन्नं च ददासि ( दरिद्रेभ्यः ), फलाकाङ्क्षारहितेन निष्कामकर्म्मणा ( भगवदर्पणबुद्ध्या चित्तशुद्धिक्रमेण वा ) भगवत्साक्षात्कारः घटते । ( तेन जन्मजरामरणजं भयं न भवति जययोग्यम् ) ।

ये तु स्वनामयशःपुण्याकाङ्क्षया कर्म्माणि कुर्व्वन्ति तानि सकामानि उच्यन्ते । न तु ते फलाकाङ्क्षारहिताः । अपि च त्वं सिद्ध एव ।

विद्यासागरः—कथं ( सिद्धोऽस्मि ) ?

श्रीरामकृष्णः—पटोलालुसमाख्ये फले सिद्धे कोमले स्तः । ( तद्वत् हि ) तवात्यन्त-कोमलतास्ति । ( यतः ) तव एतावती दया ( सर्व्वभूतेषु ) ।

विद्यासागरः—निष्पेषिते सिद्धे च सति माषे न याति तस्य काठिन्यम् । न तु कोमलता समायाति ।

श्रीरामकृष्णः—नैवं त्वं । यतः ये तु केवलमेव असिद्धा पण्डिता इति नामधेया विवेकवैराग्यहीनाः कामकाञ्चनसक्तास्ते तु शकुनिवत् विचरन्त्यविद्यावति संसारे । यथा शकुनयस्तूपरि वियति उड्डीयन्ते परन्तु तेषां दृष्टिर्निबद्धा पूतिगन्धमयस्थाने । पुनश्च ब्रह्मसम्बन्धिनीं गाथां कथयति श्रीरामकृष्णः । धर्म्माधर्म्मज्ञानसुखदुःखे-च्छादिकं भूतभौतिकभावाभावरूपं कार्य्यात्मकम् जगत् । त्रिगुणात्मकत्वाचास्य भवति धर्म्माधर्म्मवैलक्षण्येन सुलभः शुभाशुभसमावेशः ।

प्रोक्तधर्म्मादेरन्तःकरणधर्म्मतया अन्तःकरणपरिच्छिन्ने चैतन्ये जीवाख्ये च तेषां अध्यासात् जीवः कर्त्ता सुखी दुःखीति भवत्यज्ञानकृतमिथ्याव्यवहारः ।

ब्रह्मणि तु सच्चिदानन्दे नाज्ञानलेशावकाश इति न तत् कार्य्यस्य शुभाशुभा-देरन्वयः कदापि ।

( तथा चोक्तम् सूर्य्यो यथा सर्व्वलोकस्य चक्षुर्नलिप्यते चाक्षुषैर्बाह्यदोषैः । एक-स्तथा सर्व्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ) ।

यथा—मध्यस्थः प्रदीपस्तत्सन्निधौ कश्चित् भागवतादिकं पठति कश्चित् पर-

प्रतारणार्थं चेष्टते। न हि तेन शुभाशुभकर्म्मणा प्रदीपो बद्धः। तद्वत् साक्षी उदासीनो मध्यस्थ इति निर्लेप एव। यद्यपि मायाधिष्ठानं ब्रह्म तथापि तया नैव लिप्तम्। यथा सर्पः स्वनिष्ठेन विषेण नोपलिप्यते, तस्य च विषकार्य्यमरणादिकं न भवति, तद्वत् माययाऽणुमात्रमपि ब्रह्म न सम्बध्यते[१]।

अपि च यतोऽवाङ्मनसगोचरं ब्रह्म अतोऽनुच्छिष्टं हि तत्। सर्वतत्त्वातीतत्वात् करणग्रामेण प्रकाशयितुमसमर्थमिति।

वेदपुराणतन्त्रमीमांसादिचतुर्दशविद्यास्थानानि उच्छिष्टतामापुः। नैव ब्रह्म उच्छिष्टं तस्मात् अवाङ्मनसगोचरं ब्रह्म। (ज्ञानादेर्विशिष्टविषयकत्वेन निर्विशेषं ब्रह्म प्रमाणाविषयइति सर्वव्यवहारातीतम्।)

विद्यासागरः—अनुच्छिष्टं ब्रह्म एतत्वाक्यं श्रुत्वा विस्मयेन तत्रत्यानाह। शिक्षिताद्य नवीना काचन हितवाणी।

श्रीरामकृष्णः—श्रूयतामाख्यायिका। कस्यापि द्वौ पुत्रौ स्तः। आर्यसंस्कृत्या संस्काराश्रमाद्यानुकूल्यार्थं पित्रा वेदाध्ययनार्थं तौ प्रेरितौ गुरुकुलम्। तत्र यावत्कालमुषित्वा वेदाध्ययनानन्तरमाजग्मतुः स्वगृहम्। आगत्य पितरं प्रणेमतुः। पिता तयोः शिक्षापरिचयार्थं पप्रच्छ। हे कुमारौ, गुरुकुले स्थित्वा युवाभ्याम् वेदा अधीताः कीदृशी ब्रह्मविद्याऽधिगता इति वदताम्, किंस्वरूपं ब्रह्म? तच्छ्रुत्वा ज्येष्ठपुत्रो वेदेभ्यो बहून् श्लोकान् उद्धृत्य ब्रह्मस्वरूपं ज्ञापयामास। (स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते। सत्यज्ञानमनन्तं ब्रह्म इत्यादिकम्,)

कनिष्ठपुत्रः पितुः वचः श्रुत्वा ज्ञात्वापि किमपि न बभाषे। मौनी तस्थौ। कुमारं तूष्णीम्भूतम् दृष्ट्वा प्रसन्नः पिता तमिदमुवाच तात! त्वया किंचित् ज्ञातं ब्रह्मस्वरूपं।

(यस्यामतं तस्य मतं मतं यस्य न वेद सः।) मौनमपि लक्षणं ब्रह्मविदः। परन्तु प्राकृता जना ज्ञानार्थं प्रयतमानास्ते अहङ्कारेण वदन्ति वयं सर्वज्ञा इति। यथा काचित् पिपीलिका शर्कराशैलमापन्ना शर्करायाः कणमेकं भुक्त्वा कणान्तरं संगृह्य गच्छन्ती शर्कराशैलमतः परं नेष्यामि इति कल्पयति तथैव हि अज्ञानां ब्रह्मणि कल्पना।

---

(१) अयमाशयः—अविद्यादेस्तच्छक्तिविशेषतया तन्निष्ठत्वेपि तदनतिरेकात् "सदेव सोम्येदमग्र आसीत्", इत्यादिना तत्प्रतिपादनात् अतिमहतो ज्ञानस्याश्रयाभावेण सहावस्थानाभावेन च अज्ञानस्य परिच्छिन्नस्य न ज्ञानावरकत्वं सम्भवति। अत एव न ब्रह्मणयज्ञानसम्बन्धः। किन्तु जीव एव इति केचिद्वदन्ति।

भवन्तु नाम चरमपदाधिरूढ़ा नियन्तारः शासकाश्च मानवादयो ब्रह्मादयो वा तथापि तं ज्ञातुं नार्हन्ति। यतः स हि ईश्वराणामीश्वरः पतिः पतीनाम्, नियन्ता नियन्तृणाम् शासकः शासकानाम्। (श्रुतिरस्य, तद्धु नात्येति कश्चन कोऽद्धावेद इत्यादि दुर्ज्ञेयं वक्ति।)

"स्यादेतत्, तर्हि वेदपुराणादिषु या ब्रह्मप्रतिपादिका उक्तयस्ताः कीदृश्यः स्युः? श्रूयताम्। कश्चित् दृष्टसागरं पुरुषं पप्रच्छ? अये, कीदृशो दृष्टः सागरः। तत्स्वरूपं प्रबोधय माम्। विस्मयेन दृष्टपुरुषः ज्ञापयामास। अहो! सहिजलनिधिरत्युच्चैस्तरङ्ग-भङ्गो यत्र प्रचुरकलनादश्च अद्भुतो हि सः। इदमेवैव वाच्यमपरं किञ्चित्।" (उक्तञ्च न हि ते ते असाधारणा धर्म्मा अनुभूयमाना अपि शक्या वक्तुम्। न खल्विक्षुक्षीर-गुडादीनां मधुररसभेदाः शक्याः सरस्वत्याप्याख्यातुम्।) तद्वत् हि शास्त्रवाक्यानि यथाकथञ्चिदर्थप्रतिपादकानि भवन्ति प्रायशः। सगुणनिर्गुणब्रह्मप्रतिपादिकास्ता वाचः परोक्षं बोधयन्ति। परोक्षं हि शास्त्रज्ञानम्।

शुकदेवादिमहर्षयो ब्रह्मसागरवेलायां दण्डायमानास्तद् दर्शनं स्पर्शनं चाकुर्वन्। न तु ते सच्चिदानन्दसागरे प्रविष्टा इति केचित्। अस्मिन् सच्चिदानन्दसागरे प्रविष्टे तस्मात् पुनरागमनं न सम्भवति।

समाधिना ब्रह्मसाक्षात्कारः घटते, तस्मिन्नखण्डबोधात्मनि निर्विकल्पसमाधि-विषये सति सर्व्वकल्पनारहिता विचारवर्जिता तूष्णीमवस्था भवति। किं ब्रह्मस्वरूपं वक्तुं न शक्यते कैरपि। "ब्रह्मविद् ब्रह्मैव भवति, तत् केन कमभिवदेत् इत्यादि" श्रुतिसहस्रं तत्र प्रमाणम्।

यथा–एकदा काचित् लवणपुत्तलिका कियत् गाम्भीर्य्यमर्णवस्य इति परिमातु-मर्णवं प्रविष्टा, प्रविष्टैव तस्मिन् लीना। तत्क्षणमेव तत्र निलीना लवणाम्भोधौ। तस्या विलयन्तु "नाशः कारणलय" इत्याद्यनुशासनात्। तस्याः पृथक् सत्ताभावे को ज्ञापयिष्यति पारावारस्य गाम्भीर्य्यम्।

कश्चित् भक्तः अपृच्छत्। समाधिवन्तः पुरुषा ब्रह्मज्ञास्ते किं भाषां न भाषन्ते?

श्रीरामकृष्णः—न ह्येष ममाशयः। यदात्मस्वरूपोपलब्धिस्तदा भेदधियोऽभावात् विचारो न सम्भवतीत्यर्थः। समाधेर्वृत्तिशून्यत्वेऽपि उत्थाने विद्यावृत्तिर्भवति महा-पुरुषाणाम्। यथा शङ्कराचार्य्यादयो लोकहिताय विद्यावृत्तिमवलम्ब्य ब्रह्मविद्यां लोके प्रचारयामासुः। यावत् न ब्रह्मसाक्षात्कारस्तावत् विचारणाबुद्धिः। यथा इदं सत् इदम-सत् इदं पुण्यं इदं पापं। यावदपरिपक्वं हविस्तावदेव कलकलध्वनिः। परिपाके तु नैव शब्दस्तद्वत्। अपि तु तत्प्रकटाहस्थितपरिपक्वहविषा गोधूमपिष्टकं (लुचि

इतिख्यातं ) पक्वतासमये कलं कलं यथा विनदति ब्रह्मात्मनैव तिष्ठताऽपि विदुषा अज्ञं ज्ञानवन्तं विधातुं तथा उच्यते ।

अन्यद् यथा द्विरेफा यावत् पुष्पेभ्यो मकरन्दं न पिबन्ति तेषां गुञ्जनानि भवन्ति न तु पानवेळायाम् । अपितु कदापि मधु पिबन्तस्ते परमानन्देन नदन्ति ।

यथा जलग्रहणसमये कुम्भात् भक् भक् ध्वनिर्जायते पूर्णे तु नैव शब्दः । अपितु पूर्णकुम्भात् कुम्भान्तरापूरणदशायां पुनः शब्दो भवति ।

तद्वत् हि नित्यशुद्धमुक्तस्वभावा ज्ञानिनोऽपि जगत्कल्याणाय विद्याप्रवर्त्तनाय ज्ञानदानाय च आचरणभाषणशरीरधारणानि कुर्वन्ति । नैवान्यत् प्रयोजनं किञ्चिदस्ति तेषाम् । (क्रमशः)

लेखकः स्वामी जगन्नाथानन्दपुरी ।

---

## शास्त्रपारम्यमीमांसा ।

( निबन्धकः, पण्डितभूषणं व्याकरणस्थापकः, विद्यालङ्कारः, K. S.
कृष्णमूर्तिशास्त्री रा–दे–महाविद्याशाला मदुरा )

"धर्मो वर्मसमः कृत्स्नशर्मदो धरणौ नृणाम् ।
येन प्रकाश्यते तस्मै निगमाय नमो नमः ॥"
"सुखबोधाय बालानां गद्यैर्लघुपदक्रमैः ।
शास्त्रपारम्यमीमांसां प्रारभेऽहं स्मरन्गुरून् ॥"

प्रसीदतु सरस्वती । तरङ्गयतु कृपापाङ्गं मङ्गलदेवता । भगवत्याः पृथिव्या हीरहारायिते वर्षेऽस्मिन्भारते, दुर्लभं तपसाऽपि भूयसा जनिमुपगतवतामस्माकं भाग्यमवाङ्मनसगोचरं भृशमुत्सुकोऽस्मि वदितुमुदीतकौतुकं पुरस्ताद्भवतां वाचकमहोदयानाम् । यतो न मन्यामहे भारतमातुः प्रेमपुत्रास्तृणायापि पदं गीर्वाणराजस्य । किं बहुना, भगवान्वैकुण्ठोऽपि समुदकण्ठत स्वयमवतरीतुमनेकात्मना भारतभुवं धर्मत्राणैकपरायणः । यद्यपि धर्मस्य संक्षयो ग्लानिर्वा न केवलं भवितुमर्हति भारते, अपितु सर्वत्र धरित्र्या मण्डल इति युक्तमास्थातुम्, एवञ्च तत्र तत्र धर्मसंस्थापनार्थमावश्यको भवति भगवतोऽवतारः, तथापीतिहासपुराणादिषु प्रमाणत्वेन परिगृहीतेषु न वयमुपलभामहे कथञ्चिदप्यन्यत्र भारतभुवोऽवतरणं नारायणस्येति । क्रिस्तुमतानुसारिणोऽपि क्रिस्तुमाचार्यं न व्यपदिशन्ति सर्वेश्वरत्वेन, अपि तु तत्कुमारत्वेनैव । मोहम्मदीया अपि मोहम्मदमीश्वरदूतत्वेनैव स्तुवन्ति, नेश्वरत्वेन । ईश्वरस्य-

कुमारो वा भवतु, दूतो वा, सर्वथायातमेतन्नेश्वरावतार इति । अनेन गौरवमपर-
दुरवापं काममभ्युपेतव्यं भवत्यकामैरपि विमतानुयायिभिर्भारतवर्षस्य । कथमन्यथा
मतिरुद्भवेद्भगवतः "भुवं भारतीमवतीर्य स्वात्मना धर्मव्यवस्थां करिष्यामि" इति ।
अचक्रमन्त नितान्तमादित्या अपि पुरुहूतप्रभृतयः स्वैरमवतीर्य धर्मैकप्रधानं भारतं
भोक्तुमव्याहतं भोगानिति स्पष्टतरोऽयं विषयः स्मृतीतिहासपुराणपरिशीलनशालि-
नाम् । अनादिसिद्धोयमनुबन्धोऽवबुध्यते विबुधानां भारतीयानाञ्चेति विनिश्चितं
"दुदोह गां स यज्ञाय सस्याय मघवा दिवम् । संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥"
इत्यादिना । कति भूपतयो भारतीया दशरथादयस्साहाय्यमकुर्वत समरादिषु बलाराते-
रिति परिपश्यत । अनेन सम्बन्धस्याविच्छेदस्सूच्यते । न यागो नाम स्वार्थं केवल-
मभिप्रेत्य केनचित्क्रियमाणः कर्मविशेषः, अपि तु जगतां विभूत्यै समनुष्ठीयमानः
कर्त्रा स्वसुखविमुखेनेति न वेत्तुमर्हस्यभारतीयः । किं बहूना, समग्रोऽप्यस्माकं समा-
म्नायैर्विहितो यागहोमदानादिः क्षेमायैव जगतां समस्तानामित्यभिसन्दधते सुधिय-
स्सर्वेऽपि । तादृशवर्मसमधर्मसन्तान एव भारतीयानामस्माकमसमानो धनागमः
पारंपर्यादनुवर्तमानः । अत एव प्रकृष्यामहे दिविषद्भ्योऽपीति सगर्वोद्रेकं संगिरामहे ।
भारतमण्डलस्य यद्गौरवमसामान्यं, तस्य शक्नोति हेतुर्भवितुमेक एव धर्मः । न
सकलभुवनसाधारणत्वेन परिगण्यमानो भक्त्यादिरिति सन्दर्भेऽन्यत्र निपुणं प्रमाणै-
रुपपादयिष्यामः । त एते प्रतिपाद्यन्ते धर्माः श्रुतिभिरिति तेषामेव, यद्यपि श्लिष्यते
शासनकरणत्वाद्व्यवहारश्शास्त्रत्वेन, तथापि तदुपकारकाणां व्याकरणप्रमुखानामङ्ग-
ज्ञानां, न्यायादीनामपि दर्शनान्तराणां दर्शनाद्व्यवहारस्य शास्त्रत्वेन लोके, समा-
म्नायानामिव तेषामपि ज्ञानमापाततः पृथुकानां तत्कल्पानाञ्च लौकिकानामावश्यक-
मिति विनिश्चिन्वानस्समुदञ्चत्कौतुकं कर्तुमुपक्रमेतरां यथामति भवतां पुरस्ताच्छास्त्र-
पारम्यमीमांसाम् । अत्र सन्दर्भे कस्यचन स्मरामि प्रार्थनां, "दृष्टं किमपि लोके-
ऽस्मिन्ननिर्दोषं न निर्गुणम् । आवृणुध्वमतो दोषान्विवृणुध्वं गुणान्बुधाः" इति ।
सार्थकमेतत्पद्यं मय्यपि भवेदिति विश्वसन् प्रथमतः प्रधानाङ्गत्वेन व्याकरणस्य
पारम्यं वक्तुं प्रक्रमे ।

## सूर्योदय नियमाः ।

( १ ) सूर्योदयः प्रतिपूर्णिमं प्रकाशितो भवति । ये पञ्चरूप्यकात्मकं ५) वार्षिकं साहाय्यं करिष्यन्ति ते संरक्षका भवितुमर्हन्ति । वार्षिकं मूल्यं भारते मुद्रात्रयम् ३) बहिर्भारतञ्च मुद्राषट्कम् ६) भारते विद्यार्थिभ्यः १) रूप्यकेणैकेनेदं पत्रं प्रदीयते । सर्वत्रैव अग्रिमं मूल्यं गृह्येत ।

---

२—धनादेशपत्र—( मनिआर्डर ) द्वारैव मूल्यप्रेषणं साधीयः । वी० पी० द्वारा प्रेषणे मूल्यादधिकम् आणकषट्कं ।≈) पत्रग्राहकाणां लगिष्यति ।

( ३ ) ग्राहकैः प्राचीनैः स्वीया ग्राहकसंख्या, नवीनैश्च 'नवीनोऽहम्' इति लेख्यमेव । अन्यथा पत्रप्रेषणे तथाऽन्यव्यवस्थाविधाने च महान् विलम्बो भवेत् । येषां समीपे समुचितसमये सूर्योदयो न गच्छेत् तैः पत्रालये ( पोस्ट आफिस ) अन्वेषणानन्तरं शीघ्रं सूचना देया । धनादेश-( मनिआर्डर ) द्वारा स्वपूर्णसंकेतं सुस्पष्टं विलिख्य सूर्योदय-मूल्यं प्रेषणीयम् । अत्र विज्ञापनदाने महीयसो लाभस्य सम्भावना । विज्ञापननियमाः पत्रं प्रेष्य ज्ञेयाः । सूर्योदये मुद्रापणीयानि निबन्धादीनि तत्सम्बन्धिलिपिः, कार्यालय-व्यवस्थाविषयकलिपिश्च "कार्याध्यक्ष सूर्योदय-कार्यालय जगत्गञ्ज, बनारसकैण्ट" इति संकेतेन प्रेषणीया ।

---

## लेखका विनिवेद्यन्ते ।

१—त एव लेखा इह प्रकाश्यन्ते ये सुस्पष्टाक्षरा विरलपङ्क्तिकाः सरल-सरला भावपूर्णाश्छात्रोपयोगिनो भवन्ति । साहित्यिका धार्मिकाः सामाजिका ऐतिहासिका गवेषणासम्बन्धिनश्च प्रसादगुणगुम्फिता लेखाः प्रकाशने प्राथम्यमाश्रयन्ति । अतश्च लेखकैः लेखस्य भावसौष्ठवे मनोहरत्वे च ध्यानं देयं न तु शब्दकाठिन्यादिषु ।

२—कविताश्च स्वल्पसंख्यका भावपूर्णा अपेक्ष्यन्ते न तु विंशत्यधिकाः ।

३—असम्पूर्णलेखः 'क्रमशः' इति कृत्वा, लेखकमहोदयैर्न प्रेषणीयः, किन्तु पूर्ण एव ।

४—अतिविस्तृताः विवादप्रधाना निबन्धा नास्मिन् पत्रे स्थानं लभेरन् । समागतानां लेखानां प्रकाशनाऽप्रकाशननिश्चये च सम्पादक एव प्रभवेत् । अस्वीकृता निबन्धाः परावर्तनव्यये ( चिटिका ) प्राप्ते परावर्तयितुं शक्येरन् ।

---

Reg. No. A 156.

## ज्यौतिषमीमांसादर्शनम् ।



---

## विद्यार्थिग्राहकेभ्यो निवेदनम् ।

असमर्थेभ्यो विद्यार्थिग्राहकेभ्यः सूर्योदयो वर्षं यावत् एकेनैव रूप्यकेण दीयते । सूर्योदयमुद्रणे प्रेषणे च कियान् व्ययो जायते, इति विवेचकाः पाठका जानन्त्येव । तथापि एकरूप्यकमेव नाममात्रं वार्षिकं गृह्यते । अतश्च विद्यार्थिभिः सत्वरमह-मिकया एव नूनं ग्राहकैर्भाव्यम् । यैरधुनापि वार्षिकं मूल्यं न प्रेषितं तैः स्वकीयं देयं मासाभ्यन्तर एव नूनं प्रेषणीयम् । अन्यथा मन्त्रिसभया निश्चितमिदं यत्येषां वार्षिकं अग्रिमं नागमिष्यति तेषां पार्श्वे सूर्योदयो न प्रेषयिष्यते ।

निवेदकः—

कार्याध्यक्ष—सूर्योदयकार्यालय, जगतगंज, बनारस ।

---

Printed at the Shri Lakshmi Narayan Press, Jatanbar, Benares,
and Published by the Bharatdharma Mahamandal, Jagatganj, Benares Cantt.
by Pt. A. P. Sharma.

# सूर्योदयः।

## त्रैभाषिको विशेषांकः।

# SURYODAYA

## SPECIAL TRILINGUAL EDITION

Published quarterly in the interest of spiritual culture of humanity, national solidarity of the Hindus, social unity, spread of national language Hindi, propagation of esoteric literature in Sanskrit, English and Hindi, religious education and sacred ideal of Brotherhood of men and Fatherhood of Almighty God

FOR

## Free Distribution

Amongst religious and educational active institutions of India and abroad of all creeds seeking after Truth, Leaders of Hindu Community, centres of the All-India Sanskrit and Spiritual University and Dharmasabhas of all the provinces of India, Mahamandal Provincial Centres and all classes of members, Patrons and Supporters of Shri Bharat Dharma Mahamandal.

---

सनातनधर्मके सिद्धान्तोंका प्रचारक यह त्रैभाषिक पत्र नियमित प्रकाशित होता है। श्रीभारतधर्ममहामण्डलके संरक्षकों, सब श्रेणीके सभ्यों तथा श्रीमहामंडलके धार्मिक विश्वविद्यालय के परीक्षाकेन्द्रोंके अतिरिक्त भारतखण्डकी नियमित कार्य करनेवाली सनातनधर्मसभाओं, शिक्षा सम्बन्धी संस्थाओं तथा अन्य सब धर्मावलम्बियोंकी स्वदेशीय और विदेशीय संस्थाओंको जो सत्यके अनुसन्धानमें रत हों उन्हें यह पत्र बिना मूल्य वितरण किया जाता है।

JUNE, 1942.

PUBLISHED BY

**SRI BHARAT DHARMA MAHAMANDAL**

*Head Office—Benares.*

## SHRI BHARAT DHARMA MAHAMANDAL

All-India Socio-Religious and Educational Association of the Sanatanist Hindus, Recognised by the Imperial and Provincial Governments, Hindu Ruling Princes, All Religious Heads and All Hindu Communities. *Head-Quarters:—Benares.* Provincial Centres in all Provinces of India and Affiliated Institutions, Branches and Examining Centres of the University all over the country. **Membership:**—Open to all Hindus of all Grades. **Sadasyas:**—General Members are required to pay annual subscription of Re. 1/- only. They will receive this Trilingual quarterly Magazine free besides other advantages.

---

## HUMBLE APPEAL TO READERS

In keeping with the object of this Journal announced on the front cover, every issue contains scientific and philosophical exposition of some principle of Dharma and Hindu Culture in an original way. Its usefulness for the spiritual advancement of the humanity is being universally appreciated. As printing materials are becoming scarce it will not be possible to supply back numbers. It is respectfully requested that the copies of Surdaya should be carefully preserved. An expression of esteemed openion about the journal will be a matter of encouragement for us.

SECRETARY MAHAMANDAL OFFICE,
*Jagatgunj, Benares Cantt.*

---

# विषय-सूची ।

*Contents of Trilingual Suryodaya, June, 1942*

# सूर्योदयः ।

## त्रैभाषिको विशेषाङ्कः ।

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जड़वाद-कैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

सप्तदशे वर्षे १७ | ज्येष्ठपूर्णिमायाः १९९९, जून १९४२ । | १२ संख्या

### ब्रह्माण्डं वपुर्दैवं जगच्च ।

साम्प्रतं मनुष्यजातौ ये विविधाः क्लेशाः या दुःसहा अशान्तयो निरन्तरमवनतयश्च परिलक्ष्यन्ते तन्मुख्यकारणं मानवीयदृष्टिकोणस्य दैवाज्जगतो वैमुख्यमेवास्ते। अर्वाचीना मर्त्या दैवस्य जगतोऽस्तित्वं नानुभवन्ति अपितु नितान्तं विस्मरन्ति स्म । तेषां दृष्टिः केवलमिन्द्रियसुखसाधनमिमं मृत्युलोकमेवाभिषज्जते स्म । अस्माकमेष मृत्युलोको भारतवर्षमस्मदीयब्रह्माण्डस्य शतांशतोऽपि न्यूनमस्ति । अत्रैव मर्त्यलोके मातृगर्भतो जन्म जायते, मनुजानां निवासः खल्वस्मिन्नेव लोके । ब्रह्माण्डवर्तिनोऽन्ये सर्वेऽपि लोका दैवा वर्तन्ते । दैवलोकाधिष्ठा देवपदप्रतिष्ठा देवा एव ब्रह्माण्डस्य निखिलं कार्यकदम्बं परिचालयन्ति, परिपालयन्ति च भारतवर्षमस्माकम् । नितान्तं प्रयोजनीयं विषयजातमेतत् पामरैस्तु विस्मृतमेव वर्तते, किञ्च, संस्कृतभाषायां प्रौढं पाण्डित्यं बिभ्राणा निगमागमवेदिनोऽस्माकं विमलधियः सुधियोऽपि नैवाऽऽवश्यकेऽस्मिन्विषये स्वीयं ध्यानं प्रयच्छन्तीति चेखिद्यते चेतो नः । प्राचीनाः सर्वेऽपि वर्णाश्रमधर्माणो जनाः प्रतिदिनमाह्निकसंकल्पमन्त्रोच्चारणद्वारेण दैवं जगन्निजहृदयपटलमानीय साक्षात्कुर्वन् । इयमपि मङ्गलमयी प्रथा सम्प्रति विलुप्तप्रायैव दृश्यते । ब्रह्माण्डं मानवाकृति मन्यते तन्नाभेरूर्ध्वमधश्च सप्त सप्त लोका वर्तन्ते । एते निखिला एव लोका मनुष्यशरीरस्य मेरुदण्डमिव सुमेरुपर्वतमाश्लिष्टाः ।

सप्तलोकानां नामानि यथा—भूर्भुवःस्वर्महश्चैव जनश्च तप एव च।

सत्यलोकश्च सप्तैते लोकास्तु परिकीर्तिताः॥ इत्यग्निपुराणम्

सप्तोर्द्ध्वं लोकाः किमाख्याः स्वर्गा अभिधीयन्ते इति निम्ननिर्दिष्टैः शास्त्रवचनैर्विविच्यते—

भुवनज्ञानं सूर्ये संयमात्॥२५॥ तत्प्रस्तारः सप्तलोकाः तत्रावीचेः प्रभृति मेरुपृष्ठं यावदित्येष भूर्लोकः, मेरुपृष्ठादारभ्याध्रुवात् ग्रहनक्षत्रताराविचित्रोऽन्तरिक्षलोकः तत्परः स्वर्लोकः, पञ्चविधः, माहेन्द्रस्तृतीयो लोकः, चतुर्थः प्राजापत्यो महर्लोकः, त्रिविधोब्राह्मः, तद्यथा जनलोकस्तपोलोकः सत्यलोक इति।

ब्राह्मस्त्रिभूमिको लोकः प्राजापत्यस्ततो महान्।
माहेन्द्रश्च स्वरित्युक्तो दिवि तारा भुवि प्रजा॥ —पातञ्जलयोगभाष्यम्।

ब्रह्माण्डव्यवस्थां यथाह स्मृतिः—

तदा मत्तो वरं लब्ध्वा स्रष्टा सृष्टिञ्चकार सः।
मायया प्रति ब्रह्माण्डे ब्रह्मविष्णुशिवात्मकाः॥
दिक्पाला द्वादशादित्या रुद्राश्चैकादशापि वा।
नवग्रहाष्टा वसवो देवाः कोटित्रयस्तथा॥
ब्राह्मणक्षत्रविट्शूद्रा यक्षगन्धर्वकिन्नराः।
भूतादयो राक्षसाश्चाप्येवं सर्वं चराचरम्॥
विश्वे विश्वे विनिर्माणं स्वर्गाः सप्त क्रमेण वै।
सप्तसागरसंयुक्ता सप्तद्वीपा वसुन्धरा॥
काञ्चनीभूमिसंयुक्ता तमोयुक्तस्थलं ततः।
पातालञ्च तथा सप्त ब्रह्माण्डमेभिरेव च॥
विश्वे विश्वे चन्द्रसूर्यौ पुण्यक्षेत्रञ्च भारतम्।
तीर्थान्येतानि सर्वत्र गङ्गादीनि व्रजेश्वर॥
यावन्ति लोमकूपानि महाविष्णोः क्रमेण च।
विश्वान्येव हि तावन्ति ह्यसंख्यानि पितुर्ध्रुवम्॥

इति ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे।

तत्रापि यथायथं द्वीपोपनिवेशः शास्त्रेषु वर्णितो यथा—

जम्बुद्वीपः प्लक्षद्वीपः शाल्मलीद्वीपसंज्ञकः।
कुशः द्वीपः क्रौञ्चद्वीपः शाकद्वीपश्च पुष्करः॥

तेषाञ्च परिमाणं तु द्विगुणं चोत्तरोत्तरम्।
समन्ततश्चोपक्लृप्तं बहिर्भागक्रमेण च॥
क्षारोदेक्षुरसोदौ च सुरोदश्च घृतोदकः।
क्षीरोदो दधिमण्डोदः शुद्धोदश्चेति ते स्मृताः॥ देवीभागवत स्कं० ८ अ० ४

द्वीपात्तु द्विगुणो द्वीपो जम्बुः प्लक्षोऽथशाल्मलिः।
कुशः क्रौञ्चस्तथा शाकः पुष्करद्वीप एव च॥
लवणेक्षुसुरासर्पिर्दधिदुग्धजलाब्धिभिः।
द्विगुणैर्द्विगुणैर्वृद्धया सर्वतः परिवेष्टिताः॥ मार्कण्डेय पुराण अ० ५४।

ततो महातलरसातलातलसुतलवितलतलातलपाताताख्यानि सप्त पातालानि, भूमिरियमष्टमी दक्षिणपार्श्वे चास्य (मेरोः) जम्बुः। तदेतत्सर्वं सुप्रतिष्ठितसंस्थान-मण्डमध्ये व्यूढं, अण्डञ्च प्रधानस्याणुरवयवो यथाकाशे खद्योतः, तत्र पाताले जलधौ पर्वतेष्वेतेषु देवनिकाया असुरगन्धर्वादयः प्रतिवसन्ति सर्वेषु द्वीपेषु पुण्यात्मानो देवमनुष्याः सुमेरुस्त्रिदशानामुद्यानभूमिः ग्रहनक्षत्रतारकास्तु ध्रुवे निबद्धाः।

इति पातञ्जलयोगभाष्ये।

अवनेरप्यधस्तात् सप्तभूविवराः एकैकशो योजनायुतान्तरेणायामविस्तरेणोप-क्लृप्ताः अतलं-वितलं-सुतलं-तलातलं-महातलं-रसातलं-पातालमिति॥७॥

—भागवत स्कन्ध ५ अ० २४

सप्ताधोलोका इमे विलस्वर्गा व्यपदिश्यन्ते। किं बहुना मृत्युलोकात्मकभारतवर्षा-दितरे सर्वेऽपि लोकाः स्वर्गलोकाः सन्ति। तत्र स्वर्गे सुखभोगाय नरकं दुःखमुक्तये च मृत्योरनन्तरं मानवा भूयो भूयः प्रयान्ति। यथोक्तम् श्रीमद् भागवते—

सप्ताधोलोका अपि स्वर्गा एव। यथाह—एतेषु हि विलस्वर्गेषु स्वर्गादप्यधिक-कामभोगैश्वर्यानन्दभूतिविभूतिभिः सुसमृद्धभवनोद्यानाक्रीडविहारेषु दैत्यदानव-काद्रवेया नित्यप्रमुदितानुरक्तकलत्रापत्यबन्धुसुहृदनुचरा गृहपतय ईश्वरादप्यप्रतिहत-कामा मायाविनोदा निवसन्ति। भागवत स्कं० ५, अ० २४।

तत्रापि भारतमेव वर्षं कर्मक्षेत्रमन्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदिशन्ति। भागवत स्कं० ५, अ० १७

जम्बुद्वीपेऽन्तर्भवन्ति नववर्षाणि। पितृप्रेतनरकलोका अपि तत्रैवान्तर्भावमुपयान्ति तेषां नववर्षाणां नामधेयान्यधोनिर्दिश्यन्ते। एतेषु भारतवर्षं विहाय तदितराणि वर्षाणि देवलोकान्तर्गतान्यवधेयानि। यथाभिहितं भगवता व्यासेन श्रीमद्भागवते—

यस्मिन् ( भूलोकान्तर्गतजम्बुद्वीपे ) नववर्षाणि । एषां मध्ये इलावृतं नामाभ्यन्तरवर्षं यस्य नाभ्यामवस्थितः सर्वतः सौवर्णः कुलगिरिराजो मेरुः ।

भागवत स्कन्ध ५, अ० १६

भारतं प्रथमं वर्षं ततः किम्पुरुषं स्मृतम् ।
हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥
रम्यकं चोत्तरे वर्षं यस्यैवानुहिरण्मयम् ।
उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥
नवसाहस्रमेकैकमेतेषां द्विजसत्तम ।
इलावृतं च तन्मध्ये सौवर्णोमेरुरुच्छ्रितः ॥
भद्राश्वं पूर्वतो मेरोः केतुमालं च पश्चिमे ।
वर्षे द्वे तु मुनिश्रेष्ठ तयोर्मध्ये इलावृतम् ॥ विष्णुपुराण अंश २ अ० २
यानि किम्पुरुषादीनि वर्षाण्यष्टौ महामुने ।
तेषां स्वाभाविकी सिद्धिः सुखप्राया ह्ययत्नतः ॥
विपर्ययो न तेष्वस्ति जरामृत्युभयं न च ।
धर्माधर्मौ न तेष्वास्तां नोत्तमाधममध्यमाः ॥
न तेष्वस्ति युगावस्था क्षेत्रेष्वष्टासु सर्वदा ।
हिमाह्वं यस्य व वर्षं नाभेरासीत्महात्मनः ॥

विष्णुपुराण अ० २ अं० २

जम्बूद्वीपान्तःपातिनववर्षेषु मृत्युलोकात्मकमस्मदीयं भारतवर्षमेकमास्ते । समग्रस्य मृत्युलोकस्य नामधेयं भारतवर्षमस्तीति निम्नविन्यस्तः प्रमाणपुञ्जः प्रमाणयति। यदधुना हिन्दुस्थानरूपि भारतखण्डं भारतवर्षमभिभण्यतेऽनभिज्ञैस्तच्छास्त्रं विरुणद्धि । कुत्रापि भारतवर्षमैहलोक इति वर्ण्यते । भारतवर्षं आर्यावर्तस्य मुख्यत्वात् सामान्यतो हिन्दुस्थानं भारतवर्षमिति वक्तुं प्रथीयसी प्रथा प्रचलतिस्म । भारतखण्डात्मकस्यार्यावर्तस्य भारतद्वीपस्य वा धर्ममोक्षसद्भावादेव वर्षमिदं भूलोकादिनामभिरभिधीयते ।

अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ललोहितकृष्णवर्णेन स्वारब्धेन कर्मणा दिव्यमानुषनारकगतयो बह्वयः आत्मनः आनुपूर्व्येण सर्वा ह्येवं सर्वेषां विधीयन्ते यथा वर्णविधानमपवर्गश्चापि भवति । भागवत स्कं० ५, अ० १९

भरणात्प्रजनाच्चैव मनुर्भरत उच्यते ।
निरुक्तवचनैश्चैव वर्षं तद्भारतं स्मृतम् ॥

यतः स्वर्गश्च मोक्षश्च मध्यमश्चापि हि स्मृतः ॥
भारतस्यास्य वर्षस्य नवभेदान् निबोधत ।
अयन्तु नवमस्तेषां द्वीपः सागरसम्वृतः ॥
आयतस्तु कुमारीतो गङ्गाया प्रवहावधिः ।
द्वीपो ह्यपनिविष्टोऽयं म्लेच्छैरन्तेषु सर्वशः ॥
यवनाश्च किराताश्च तस्यान्ते पूर्वपश्चिमे ।
ब्राह्मणाः क्षत्रियाः वैश्या मध्येशूद्राश्च भागशः॥
मत्स्यपुराण अ० ११४

चतुर्दशभुवनमयब्रह्माण्डीयविराट्शरीरस्थित्यवबोधनार्थं शास्त्रसमूह इत्थं प्रतिपादयति यद् भूलोके भुवर्लोके च सर्वे ग्रहनक्षत्रादयोऽवतिष्ठन्ते । निशायामुत्तरदिशि ध्रुवो ध्रुवलोको नित्यमेकस्मिन्नेव स्थाने स्थिरो निरीक्ष्यते । अयं भुवःस्वर्लोकयोर्मध्ये सन्तिष्ठते । स्वर्गादयः पञ्चोर्ध्वलोका एवमुपर्युपरि विराजन्ते ।

अर्थममुं सम्मनुतेऽधोविन्यस्तस्मृतिवचननिचयः—

अण्डमध्यगतः सूर्यो द्यावाभूम्योर्यदन्तरम् ।
सूर्याण्डगोलयोर्मध्ये कोट्यः स्युः पञ्चविंशतिः ॥
सूर्येण हि विभज्यन्ते दिशः खं द्यौर्महीभिदा ।
स्वर्गापवर्गौ नरकरसौकांसि च सर्वशः ॥ भागवत स्कं० ५ अ० २० ।

ध्रुव उवाच—आधारभूतं जगतः सर्वेषामुत्तमोत्तमम् ।
प्रार्थयामि प्रभो स्थानं तत्प्रसादादतोऽव्ययम् ॥
श्रीभगवानुवाच—त्रैलोक्यादधिके स्थाने सर्वताराग्रहाश्रयः ।
भविष्यति न सन्देहो मत्प्रसादाद् भवान् ध्रुव ॥
सूर्यात्सोमात्तथाभौमात् सोमपुत्राद् बृहस्पतेः ।
सितार्कतनयादीनां सर्वर्क्षाणां तथाध्रुवम् ॥
सप्तर्षीणामशेषाणां ये च वैमानिका सुराः ।
सर्वेषामुपरि स्थानं तव दत्तं मया ध्रुव ॥ विष्णुपुराण अं० १ अ० ११ ।

मेरोरुभयतो मध्ये ध्रुवतारे नभःस्थिते ।
निरक्षदेशसंस्थानामुभये क्षितिजाश्रिते ॥
भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः ।
पर्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम् ॥ सूर्यसिद्धान्त अ० १२ ।

प्रवहानिला यथा—आमेघाद्भास्करात्सोमान्नक्षत्राद् ग्रहमण्डलात् ।
ऋषिसप्तकनिर्देशादाध्रुवान्तं च सप्तमः ॥ तन्त्रालोकः ।

एवमनेकानि अनन्तकोटिब्रह्माण्डानि यथा—

अस्य ब्रह्माण्डस्य समन्ततः स्थितान्येतादृशानि अनन्तकोटिब्रह्माण्डानि सावरणानि ज्वलन्ति। चतुर्मुखपञ्चमुखषण्मुखसप्तमुखाष्टमुखादिसंख्याक्रमेण सहस्रावधिमुखान्तैर्नारायणांशैः रजोगुणप्रधानैरेकैकसृष्टिकर्तृभिरधिष्ठितानि विष्णुमहेश्वराख्यैर्नारायणांशैः सत्त्वतमोगुणप्रधानैरेकैकस्थितिसंहारकर्तृभिरधिष्ठितानि महाजलौघमत्स्यबुद्बुदानन्तसङ्घवत् भ्रमन्ति। नारायणोपनिषद्।

कालस्यानन्तता यथा—चतुर्युगसहस्राणि दिनं पैतामहं भवेत्।

पितामहसहस्राणि विष्णोश्च घटिका मता॥

विष्णोर्द्वादशलक्षाणि कलार्धं रौद्रमुच्यते।

(दैवीमीमांसा भाष्य, उत्पत्तिपाद, सूत्र ४)

चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते।

पितामहसहस्राणि विष्णोरेका घटिका मता॥

विष्णोर्द्वादशलक्षाणि निमेषार्धं महेशितुः।

दशकोट्यो महेशानां श्रीमातुस्त्रुटिरूपकाः॥ —शक्तिरहस्यम्।

ब्रह्मणो दिनमध्ये चतुर्दशमन्वन्तराणि भवन्ति। एको मनुर्यावदधिकारी भवति स कालो मन्वन्तरसंज्ञको भवति। अथैतेषां कर्मोच्यते। इन्द्रो देवराट् यथावर्षी च। मनुरादौ पृथिव्यां राजा भवति तत्पुत्रपौत्रादयो मन्वन्तरसमाप्तिपर्यन्तं राजानो भवन्ति। देवताः प्रजानां यज्ञादिकर्मतुष्टास्तत्फलं प्रयच्छन्ति। सप्तर्षयो धर्मशास्त्राणि प्रकाशयन्ति। भगवदवतारा एतान् स्वस्वकर्मणि नियोजयन्ति दैत्यराक्षसादीन् धर्मद्रुहो घ्नन्ति च। चतुर्दशमन्वन्तरैर्ब्रह्मण एकं दिनं भवति। तन्मनुष्यमानेनैकः कल्पः त्रिंशत्कल्पैर्ब्रह्मणः एको मासो भवति। इति भागवतमतम्।

मानुषमानेन सत्यादीनां मानं यथा—

ज्यौतिषे—वस्वश्विमैत्रा ऋतुरन्ध्रमासा वेदारसाष्टौ भुजवह्निवेदाः।

एतानि शून्यत्रयताडितानि युगाब्दसंख्याः परिकीर्तितानि॥

एतदङ्कैर्दृश्यते सत्यस्य यथा—१७२८००० । त्रेताया यथा—१२९६००० । द्वापरस्य यथा—८६४०००। कलेर्यथा ४३२०००। समुदायेन ४३२००००।

एवं चतुर्युगाख्यानां साधिकाह्येकसप्ततिः।

कृतत्रेतादियुक्तानां मनोरन्तरमुच्यते॥ इति लिङ्गपुराणम्।

दैविकानां युगानान्तु सहस्रं ब्रह्मणोदिनम्।

मन्वन्तरं तथैवैकं तस्य भागाश्चतुर्दश॥

मन्वन्तरस्य संख्यातवर्षाणि यथा—

त्रिंशत्कोट्यस्तु वर्षाणां मानुषेण द्विजोत्तमाः।
सप्तषष्टिस्तथान्यानि नियुतान्यधिकानि च॥
विंशतिस्तु सहस्राणि कालो यः साधिकां विना।
मन्वन्तरस्य संख्यैषा लिङ्गेऽस्मिन्कथिता द्विजाः॥

एतदङ्का यथा—३०६७२०००० । एवं चतुर्दशमन्वन्तरैर्ब्रह्मदिनम् । इति लिङ्गपुराणम् ।

मार्कण्डेय उवाच—मन्वन्तराणां संख्याता साधिका ह्येकसप्ततिः।
मानुषेण प्रमाणेन शृणु मन्वन्तरञ्च मे॥
त्रिंशत्कोट्यस्तु संख्याता सहस्राणि च विंशतिः।
सप्तषष्टिस्तथान्यानि नियुतानि च संख्यया॥
मन्वन्तरप्रमाणञ्च इत्येतत् साधिकां विना।
अष्टौ शतसहस्राणि दिव्यया संख्यया स्मृतम्॥

वर्षलक्षाणि चत्वारि भवेत् कलियुगं क्रमे।
द्वात्रिंशत्या सहस्रैस्तु सहितान्यपि संख्यया॥
चतुःषष्टि सहस्राणि लक्षाण्यष्टौ च संख्यया।
वर्षाणां द्वापरं प्रोक्तं युगं पूर्वनिदर्शनात्॥
त्रेता द्वादशलक्षाणि वर्षाणां परिकीर्तिताः।
षण्णवत्या सहस्रैस्तु संयुक्तानि भवन्ति हि॥
दश सप्त च लक्षाणां वर्षाणाञ्च कृतं युगं।
सहस्रैरष्टविंशत्या संयुतान्यपि संख्यया॥
त्रिचत्वारिंशल्लक्षाणि सहस्राणि च विंशतिः।
मानुषेण प्रमाणेन भवेत् चातुर्युगं क्रमात्॥
सप्तषष्टिश्च लक्षाणि त्रिंशत्कोट्यस्तथैव च।
विंशतिश्च सहस्राणि मन्वन्तरमिहोच्यते॥
चतुर्युगैकसप्तत्या मन्वन्तरमिति श्रुतिः।
कल्पो मन्वन्तरैरेभिश्चतुर्दशभिरुच्यते॥
कोट्यो द्वादश षट्त्रिंशल्लक्षाणि तु भवन्ति च।
अष्टाशीति सहस्राणि जीवेत् स्वायम्भुवो मनुः॥ इति वह्निपुराणम् ।

अपरञ्च मार्कण्डेय उवाच।

मन्वन्तरं मनोः कालो यावत् पालयते प्रजाः।
एको मनुः स कालस्तु मन्वन्तरमिति श्रुतम्॥
तदेकसप्ततियुगैर्देवानामिह जायते।
तैश्चतुर्दशभिः कल्पो दिनमेकन्तु वेधसः॥

इति कालिकापुराणे २७ अध्याये।

प्रलयकाले रुद्रतेजसा अधस्तात् दशलोकानां विनाशो भवति यथा—

लोकान्दहति दीप्तात्मा रुद्रतेजो विजृम्भितः॥
स दग्ध्वा पृथ्वीं देवो रसातलमशोषयत्।
अधस्ताद् पृथ्वीं दग्ध्वा दिवमुर्ध्वं दहिष्यति॥ कूर्मपुराणम्
तदा हि दह्यते सर्वं त्रैलोक्यं भूर्भुवादिकम्।
जनं प्रयान्ति तापार्ता महर्लोकनिवासिनः॥
एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः।
भोगिशय्यागतः शेते त्रैलोक्यग्रासबृंहितः॥
जनस्थैर्योगिभिर्देवश्चिन्त्यमानोऽब्ज सम्भवः।
तं प्रमाणं हि तां रात्रिं तदन्ते सृज्यते पुनः॥

विष्णुपुराण, प्रथमांश, अ० ३।

ऊर्द्ध्व मुल्लिखितप्रमाणपुञ्जैः विराजो ब्रह्माण्डशरीरं किंविधमास्ते, तस्य प्रधानविभागा लोकादयश्च कथङ्कारमवतिष्ठन्ते, अत्र ब्रह्माण्डे भारतवर्षात्मिकाया भूम्याः स्थितिः क्वास्ति, देवासुरलोकौ कुत्राधितिष्ठतः, ब्रह्माण्डस्यास्य विराड्रूपं किंविधया हृदयपटलमानयनीयम्, नानाविधानां लोकानामुद्भवस्थितिसंहारकालोऽपि शास्त्रनिचयैः कीदृग् निर्णीत इत्यादि विषयजातं जिज्ञासूनां सारल्येन सुबोधं सम्पत्स्यते। वर्णाश्रमधर्मावलम्बिनो विद्याविद्योतितान्तःकरणाः सुधियो दैवस्य जगतः कीदृक् व्यापकत्वमन्वभवन्। किं वहुना, ते चराचरात्मके विश्वस्मिन् जगति दैवीं सत्तां मन्यमाना नदीसमुद्रपर्वतप्रभृतिषु वनवृक्षादिष्वपि विभिन्नमाधिदैवं भावमङ्गीचक्रुः। तत एवाश्वत्थतुलसीवृक्षादीनां गोजातेरपि समर्चा समाम्नाता वेदादिशास्त्रेषु। जडं जगत् चेतनसाहाय्यं विना रक्षितं न स्याद् एतावदत्र रहस्यम्। दैवप्रभावविस्मरणमेवार्यजातेरर्वाचीनाया दुःखस्थितेर्निदानम्। सर्वशक्तिमतो भगवतो व्यापकमधिदैवसद्भावमन्तरात्मनि सर्वथाऽवदधाना आध्यात्मिकोन्नतये आर्यजातिः पुनः प्रवर्त्ततामित्यशरणशरणभगवच्चरणेषु नित्यं प्रार्थयते।

श्रीतत्सत्

# SURYODAYA

TRILINGUAL SPECIAL QUARTERLY EDITION,
JUNE, 1942.

## STRUCTURE OF THE UNIVERSE.

The modern world starts with the gross perceptible objects, but the intuitive mind of ancient Hindustan (Bharatkhand) went beyond gross perceptions and was the early preceptor of the world (Bharatvarsha). Since early days of creation the Hindu Mind was able to see by the yogic innersight worlds and planets, Lokas and abodes, beings, constitutions and destinies of animate and inanimate beings. Physical science has hitherto intimately concerned itself with the purely materialistic view of nature and satisfied itself with the successful research only of the geographical and astronomical subjects. The whole tendency of the scientific research scholars of present days is for devoting their energy to the materialistic side only, and we may say, not for construction but for destruction only. It is being amply established now that this has been an unfortunate waste of power and human energy.

The Holy Maharshis of ancient Hindustan in their research work regarding microcosm and macrocosm of the creation found that the structure of our Brahmanda (universe) is just like the structure of the human body. The human body is the perfect one in the natural evolution of Jiva Srishti (world of animate objects). The Vaidic philosophy proves that the vegetable kingdom manifests the lowest grade of life ; the jivas of the germ-kingdom are the next in evolution ; the jivas of the egg-born kingdom are further next and superior to the former two. The jivas of the sac-born kingdom are still superior, being the fourth in the natural course of evolution. The culmination, however, of the sac-born stage is Man. So the human body is regarded as a distinct stage of developement of animal life—the structnre of the human body is considered to have reached perfection in the evolution of jivas. The motherly care of the Almighty Mother—Nature—

